


# रसना

संस्कृतमासपत्रिका

युगाब्दः ५१२५ कार्तिकमासः 2023 November
www.rasana.in
मूल्यम् - ₹ 30
ISSN 2320-4354



ज्वलद्दीपैस्तु सर्वत्र शोभमानो महोत्सवः।




# रसना

www.rasana.in



**Publishing Office**
Asmitha Publications
Yesodha Building
Puthiyara P.O.
Kozhikode - 673 004, Kerala.

Email: asmithacalicut@gmail.com
rasana@live.in

## रसनारसः

प्रतिस्पन्दः। ........ ४
सम्पादकीयम्। ........ ५
श्रीमद्रामरामायणम्। ........ ६
हमास्-इस्रयेल्-युद्धे मृत्योः ताण्डवनृत्तम्। ........ ७
वसुधैव कुटुम्बकम्। ........ ९
ज्ञानगीतम्। ........ १०
कारावासिन्यै नोबल् पुरस्कारः। ........ ११
कौतुकवार्ताः। ........ १३
वृक्षवाटिका। ........ १६
दृक्कोणः। ........ १७
पाण्डवविवासः। (नाटकम्) ........ २१
दीपावली। ........ २३
अध्ययोध्यं भवत्यद्भुतं किञ्चन। ........ २५
श्रीनन्दराजकृतकृष्णजन्मोत्सवः। ........ २७
भारतीयज्ञानपरम्परायां संस्काराणां महत्त्वम्। ........ २९
प्रश्नोत्तरम्। ........ ३२
समस्यापूरणम्। ........ ३३

Cover Photo: Arya S. Janardhanan

Edited, Printed, Published and owned by K. Syamala. Printed at A-ONE OFFSET PRINTS, Ramanattukara, Kozhikode - 673 633, Kerala.
Published at Asmitha Publications, Yesodha Building, Puthiyara P.O., Kozhikode-673 004.
(Editor responsible for selection of news under the PRB Act)

# प्रतिस्पन्दः ।

सेप्तम्बर् २५ दिनाङ्के अनावृतस्य श्रीशङ्कराचार्यस्य प्रतिमाचित्रसहिता आश्विनमासरसना भारतस्य आत्मीयताप्राधान्यमुद्बोध्य आगता। ओङ्कारेश्वरे प्रवृत्तस्य तस्य प्रतिमानाच्छादनस्य संक्षिप्तं विवरणमपि युक्तमासीत्। ततः षोडशसंस्काराणां महत्वमधिकृत्य डा. चूडामणि त्रिवेदि महाशयेन रचितं लेखनमपि भारीतयतायाः स्वत्वप्रकाशकं आसीत्।




महिला आरक्षणनियमस्य औचित्यप्रतिपादकं "सम्पादकीयम्", तथा 'जी-ट्वन्टि' उच्चकोटिमधिकृत्य अवलोकनं कौतुकवार्तायां दत्त हैड्रजन् बस्यानकार्यम्, आदित्य एल्-१ योजनामधिकृत्य विवरणं च, आनुकालिकविषयाणां अवतरणे रसना कियत् बद्धश्रद्धा भवति इति उद्घोषयति स्म।

तथा उमाकान्तशुक्लायाः संस्कृतवागष्टकम्, मनतोषभट्टाचार्यस्य श्रीमद्रामरामायणम्, ज्ञानप्पानायाः अनुवादः 'ज्ञानगीतम्', कुमुदमधिकृत्य विजयन् वी पट्टाम्बि महाशयस्य विज्ञानदायककविता च संस्कृतकवित्वस्य उन्नतस्तम्भाः भूत्वा वर्तन्ते स्म।

यद्यपि वनिताः स्वतन्त्राः इति वदन्ति, तथापि ताः बहुविध-शारीरिकमानसिक आक्रमणानां विषयाः भवन्ति इति चिन्तोद्दीपकलेखनेन, समस्यापूरणेन, प्रश्नोत्तर्या च विवधविभवैः सम्पन्नं, समृद्धा च आसीत् गतमासा रसना।

संस्कृतभाषायाः संस्कृतचित्तानां च मनोमुकुरमानन्दयन्ती रसनामासिकी चिरं विराजेत् इत्यपि प्रार्थये।

**पी श्रीजा**
पेरिङ्ङोट् HSS

आश्विनमासीया रसनापत्रिका यदा मया मित्रगृहे दृष्टा तदा भगवतः श्रीमच्छङ्कराचर्यस्य मुखचित्रं दृष्ट्वा द्रष्टुं-पठितुमिच्छा जागृता। पत्रिकायां रस-ज्ञान-विज्ञान-जनजागरण-भाषाकौशलादीनां दृष्ट्या विभिन्न विषयवस्तूनां समायोजनं दृश्यते। यथा रसोत्पादनाय संस्कृतवागष्टकं-ज्ञानगीतं-कुमुदमित्यादि सुमधुरपद्यपठानां समावेशः, ज्ञान-विज्ञानविषयाणां वेदेषु भारतशब्दः - भारतीयज्ञानपरम्परायां संस्काराणां महत्त्वं - कौतुकवार्तादिभिः पाठैः अतीव साधारणशब्दैः उल्लेखो वर्तते। जनजागरणाय - समाजे सद्भावनावर्धनाय च स्त्रीवादिन्याः अधिवक्त्र्याः भारतीदेव्याः वक्तव्यम् अतीव श्लाघनीयं वर्तते। पाठ्कानां निरन्तरता-रुचि- भाषाकौशलानां विकासाय प्रश्नोत्तरं-समस्यापूरणमित्यादि विषयाणां समायोजनं पत्रिकायाः सुन्दरतां वैशिष्ट्यञ्च वर्धयति।

समाजस्य सर्वविधविकसाय - सुखाय हिताय च पत्रिकैषा महत्त्वपूर्णां भूमिकां निर्वक्ष्यति इति आशासे।

**रसना रसवत् सारा रुचिज्ञानाभिवर्धिनी।**
**समाजस्य विकासाय पत्रिकैषा बहूत्तमा।।**

**सूर्य प्रकाश मिश्रः,**
काशीहिन्दूविश्वविद्यालयः, वाराणसी

# सम्पादकीयम्

## इण्डिया वा भारतं वा?

अस्माकं देशस्य प्राशासनिकं नाम पूर्णतया "भारतम्" इति कर्तुं प्रयत्नः प्रचलति अधुना इति अभ्यूहः कर्णाकर्णिकया प्रचरति। तत्फलतः विविधाः चर्चाः देशव्यापकतया घटन्ते च । पाठ्पुतस्तकेषु इण्डिया इत्यस्य स्थाने भारतम् इति प्रयोक्तव्यम् इति राष्ट्रिय-शिक्षा-संशोधन-प्रशिक्षण-परिषदः (NCERT) एका उच्चसमितिः निर्देशं दत्तवती। ततः परमेव बहुविधाः चर्चाः वादप्रतिवादाश्च प्रवृत्ताः इदानीम् अपि प्रबलतया वर्तन्ते च। रेल्वायमन्त्राालयः अपि इण्डिया इत्यस्य स्थाने भारतम् इति प्रयोक्तव्यम् इति निर्देशं सर्वजनसमक्षं प्रकटितवान्। परन्तु देशस्य नाम भारतम् इति एकम् एव कर्तव्यम् इति विषये केन्द्रसर्वकारपक्षतः प्राशासानिकं किमपि स्थिरीकरणम् इतः पर्यन्तं न प्राप्तम् । समीपकाले भारतसर्वकारेण अत्यधिकतया भारतम् इति नाम एव उपयुज्यते व्यवहारेषु। विंशतिगणस्य सम्मेलनार्थं प्रेषितेषु पत्रेषु तथा राष्ट्रपतिमहोदयया समायोजिते सायाह्नभोजने भागग्रहणार्थं राष्ट्रनेतृणाम् आमन्त्रणपत्रे च "President of Bharat" इत्येव लिखितम् आसीत्। तत्र शिखरसम्मेलने प्रधानमन्त्रिणः मेजस्य अग्रतः "BHARAT" इत्येव लिखितम् प्रदर्शितम् आसीत्।

संविधानस्य आरम्भे इण्डिया तन्नाम भारतम् (India that is Bharat) इत्येव अस्ति। संविधाननिर्माणकाले अपि स्वातन्त्र्यं प्राप्स्यतः अस्माकं राष्ट्रस्य किं नाम दातव्यम् इति विषये विवादः आसीत् । इण्डिया इति नाम वैदेशिकाधिपत्यस्य व्यञ्जकम् एव, अतः भारतम् इत्येव अत्यन्तम् उचितं नाम इति वादः तदा शक्तः आसीत्। एवम् अपि नामद्वयम् अपि तदा अङ्गीकृतम्।

वेदेषु तथा बहुषु प्राचीनग्रन्थेषु च भारतम् इति नाम प्रयुक्तं दृश्यते। विष्णुपुराणे वर्ण्यते -

**उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।**
**वर्षं तद् भारतं नाम भारती यस्य सन्ततिः।।**

इति। शकुन्तलायाः दुष्यन्तस्य च यः पुत्रः भरतः चक्रवर्ती तस्य नाम्नः एव राष्ट्रस्य नाम भारतम् इति जातम् इति वदन्ति। भायाम् (प्रकाशे) अर्थाद् ज्ञाने रतम् एव भारतम् इति अर्थः भारतशब्दस्य। अस्माकं राष्ट्रस्य अस्मितां सूचयद् एतद् एव नाम अत्यन्तम् उचितम् ।

**वन्दे भारतमातरम्।।**



# श्रीमद्रामरामायणम्।



## तृतीयस्सर्गः

महाचार्यः मनतोषः भट्टाचार्यः

(...अनुवृत्तम्)

क्षेत्रं हि सस्यैश्च फलैश्च पूर्णं
दृष्ट्वा सुतृप्ताः कृषका भवन्ति।
नद्यः प्रशान्ता विमलोदकैश्च
दृष्ट्वा तु पूर्णाः खलु नाविकास्ते।।४७।।
नौकाविहारोत्सुकयात्रिणश्च
तृप्ता रमन्ते प्रणयाकुलश्च।
सोपानमारुह्य तटे रमण्या
गृह्णाति नन्दं शरदि प्रदोषे।।४८।।((युग्मकम्))।।
किं वर्णयामि प्रियदे प्रिये मे
सौन्दर्यराशिं शरदि प्रकृत्याः।
रात्रावपि प्रीतजना यतस्तं
द्रष्टुं क्षमास्साधु भवन्ति चन्द्रः।।४९।।
तारागणै राजति शुक्लपक्षे
धृत्वा प्रभां हीरकपर्वतस्य।
एकोऽपि चन्द्रो महसा शताना-
मिन्दोश्छटाभां शरदि प्रधत्ते।।५०।।((युग्मकम्))।।
दृष्ट्वा शशाङ्कं सुखदं रजन्यां
कान्ता प्रतीक्ष्य प्रियवल्लभं सा।
नावाप्य गेहे शरदि प्रदोषे
प्रेमास्पदं हा स्वयमेव याति।।५१।।
शेफालिकापुष्पसुगन्धवायु-
र्विज्ञापयन्नेति घनान्तकालः।
लोकान् समस्तान् गिरिकन्यकाया-
स्सम्पूजने प्रेरयति प्रशस्तः।।५२।।
लोकास्समस्ता गिरिकन्यकायाः
धूपैश्च दीपैश्च सुपुष्पमाल्यैः।
कुर्वन्ति पूजां स्तुतिवन्दनैश्च
सर्वार्थसिद्ध्यै शरदिन्दुमुख्याः।।५३।।
राजा प्रजास्ते विबुधाश्च मूर्खा
वित्तेशदीनाश्श्वपचाश्च विप्राः।
के के न मातुर्गिरिकन्यकाया-
स्तिष्ठन्ति लब्धुं पदधौतवारि।।५४।।

**अथ हेमन्तवर्णनम्**

कान्ते घनान्ते प्रगते जगत्या-
मेषो जनानां सुखदस्समेषाम्।
शीताग्रदूतो जनचित्तहारी
हेमन्तकालस्तु समागतोऽस्ति।।५५।।
कान्ता सकामा दयितश्च कामी
तौ कामयेते मिलनाय नित्यम्।
हेमन्तकाले ह परस्परन्तु
शीतः कदाचित् खलु बाधते तौ।।५६।।

(अनुवर्तिष्यते....)



(चित्रस्य आश्रयः - Hindustan Times)

### हमास्-इस्रयेल्-युद्धे

# मृत्योः ताण्डवनृत्तम् ।



महामहोपाध्यायः डा. गङ्गाधरन् नायर्

मनुष्याः अन्यान् जन्तून् अपेक्ष्य अधिकक्रूराः दृश्यन्ते। सामान्यतः शान्तिमये वातावरणे जीवन्तः कथम् अन्यथा एकस्मिन् दिने झटिति नृशंसाः परिणमन्ते, बालानां स्त्रीणां च गलच्छेदं कृत्वा हन्ति च। ओक्टोबरमासस्य सप्तमे दिने एतद् एव घटितम् इस्रयेल्-राष्ट्रे। यद्यपि इस्रयेलस्य सेना गूढचराश्च अतीव जागरूकाः कर्मकुशलाः च तथापि ते न प्रतीक्षितवन्तः एतस्मिन् काले हमासभटाः इस्रयेले गूढं प्रविश्य जनान् आक्रमेद् इति। सूयोदयात् प्राक् तस्मिन् दिने हमासभटाः इस्रयेलं प्रविश्य १४०० तद्देशीयान् नृशंसतया हतवन्तः। २७०० जनान् बन्दिनः कृतवन्तः। तेषु बन्दिषु न केवलं इस्रयेलनागरिकाः सन्ति अपि तु अन्यदेशीयाः अपि। इस्रयेलस्य शासकाः मनोबले अतिशक्ताः, तेषां सेनाविभागाः अपि सम्यक् प्रशिक्षिताः युद्धादिकर्मकरणे असाधारणतया कुशलाः च। मोस्साद् इति प्रथितः इस्रयेलस्य गूढप्रणिधिसङ्घः अन्ताराष्ट्रियस्तरे क्रियानिरतः अस्ति यस्य सदस्याः विदेशेषु विद्यमानान् अपि इस्रयेलस्य द्रोहिणः गूढतया हन्तुं समर्थाः। बहुवारं तेषां कर्मकौशलं पूर्वस्मिन् काले लोकजनतया प्रत्यक्षीकृतं च। अत्र किं करिष्यन्ति इस्रयेलभटाः इति लोकजनता सोत्कण्ठं वीक्षते स्म। इस्रयेलस्य राष्ट्रनेता बञ्जमिन्-नेतन्याहु महोदयः लोकसमक्षं शपथं कृतवान् यत् हमास-सङ्घम्

उन्मूलयिष्यामः, तावत् पर्यन्तम् अस्माकं विश्रमः न भविष्यति इति च। यदि अस्माकम् उपरि इस्रयेलस्य आक्रमणं भविष्यति तर्हि वयं बन्दिनः सर्वान् हनिष्यामः इति हमासनेतारः घोषणां कृतवन्तः। एषः महान् विघ्नः। यदि बन्दिषु विद्यमानः विदेशीयः कश्चन हन्यते हमासेन तर्हि विदेशराष्ट्राणि इस्रयेलस्य निन्दां करिष्यन्ति।

## लोकशक्तीनाम् आनुकूल्यप्रातिकूल्ये।

अमेरिका इस्रयेलं सदा समर्थयति। इस्रयेलस्य साहाय्यार्थं सा युद्धविमानानि युद्धजलपोतान् च प्रेषितवती । ब्रिटन्, फ्रान्स् इति राष्ट्रद्वयम् अपि इस्रयेलम् समर्थयते। भारतस्य मोदिमहोदयः लोके यत्रकुत्रापि आतङ्कवादः प्रचलति तर्हि तस्य समग्रतया नाशः करणीयः इति अभिप्रायवान् विविधलोकराष्ट्रेषु पूर्वमेव प्रवासं कृत्वा स्वकीयाशयस्य प्रचारं लोकनेतृषु मध्ये कृतवान् अस्ति। अस्मिन् अवसरे महोदयः इस्रयेल्-जनतया समवेदनां प्रकटयन् इस्रयेल्-राष्ट्रस्य समर्थनं कृतवान्। अमेरिकाविरोधितया लोकाधीशत्वं काङ्क्षन्तौ रष्या-चीनौ इस्रायेलस्य प्रत्याक्रमणं न सहेते। गासाभूभागे इस्रयेल्-वायुसेनया क्रियमाणं बोम्ब-वर्षणं तत्रत्यानां पालस्तीनजनानां मरणादिबहुविधक्लेशान् जनयति इति तु सत्यमेव। परन्तु हमासेन कृतस्य दुस्साहसस्य परिणामः एव पालस्तीनैः अधुना अनुभूयते। इस्रयेल्-जनतया सहस्राधिकवर्षात् पूर्वतः इतः पर्यन्तम् अनुभूयमाना पीडा अधिकजनानां मनः न दुनोति। मुस्लिमधर्मसाम्प्रदायिकाः प्रायेण सर्वे इस्रयेलस्य स्वरक्षार्थं यत्नान् पालस्तीनविरोधः इति तथा मुस्लिमविरोधः इति कल्पयन्ति। चिन्तनीयम् एतत्। स्वदेशतः निष्कासिताः यहूदाः बहुषु देशेषु विविधान् क्लेशान् तथा अत्युग्रपीडाः अनुभूय १९४८ वर्षे एव एकम् अत्यल्पं भूभागम् इस्रयेल्-नामकं स्ववासाय प्राप्तवन्तः। हिट्लरस्य अनुयायिनः यथा यहूदान् मारणादिद्रोहैः पीडितवन्तः तथैव वा ततोऽपि अधिकतया वा इस्रयेल्-देशं नाशयितुं तथा सर्वान् यहूदान् भूमुखाद् उच्छेदयितुं मुस्लिमराष्ट्राणि इस्रयेलस्य संस्थापनाद् आरभ्य यत्तवन्तः, इदानीम् अपि यतन्ते च। आरबाः बहुवारं इस्रयेलस्य उपरि आक्रमणं कृतवन्तः। कर्मशीलाः यहूदाः तत्र सर्वत्र विजयं प्राप्तवन्तः। स्वकीयं राष्ट्रं अत्युत्तमं कृतवन्तः। परन्तु सदा समीपराष्ट्राणाम् आक्रमणात् भीताः जाग्रत्तया वसन्ति। चारविभागाः अपि सदा जागरूकाः वर्तन्ते। अत्यन्तम् आधुनिकानि यन्त्रोपकरणानि आयुधानि च ते प्रयुञ्जते।

ईरानः खत्तर् इत्यादयः इस्रयेलम् इदानीम् अपि भीषयन्ते। ते अपि इस्रयेलस्य उपरि आक्रमणोत्सुकाः सन्नद्धाः वर्तन्ते। संयुक्तराष्ट्रसङ्घे सुरक्षासमितौ इस्रयेलस्य निन्दायां प्रस्तावः अवतारितः, परन्तु पारयितुं न शक्यते स्म। भारतं मतदानात् दूरं पालितवत्। संयुक्तराष्ट्रसङ्घस्य महासचिवस्य एकं वचनम् इस्रयेलस्य प्रतिकूलं कृतं नितराम् अपलापार्हं

हमासः आतङ्कवादि सङ्घटनम् एव भवति। तेषां नेतारः खतरे सौदि-अरेबियायां सुखवासं नयन्तः इस्रयेलं प्रति तीव्रयुद्धाय प्रेरयन्ति। तेन एव पालस्तीनानां सामान्यजनानां गासावासिनां च महान् क्लेशः। गासावासिनां खाद्यवस्तूनां पेयजलस्य औषधानाम् इन्धनस्य च दारिद्र्यम् अस्ति इदानीं युद्धेन इत्यत्र नास्ति सन्देहः। अमेरिका भारतम् इत्यादीनां कृपावशात् माध्यस्थ्ये च तत्र एतादृशानि वस्तूनि वितरीतुम् इस्रयेल् अनुमतिं दत्तवान्।

## हा कष्टं केरळे !

केरळराज्ये भीकराणां सङ्घानां समर्थयितारः अधिकसङ्ख्यया सन्ति इति भयजनिका वार्त्ता। पालस्तीनानुकूलतया इति व्याजेन आयोजितं महासम्मेलनं

# वसुधैव कुटुम्बकम्।



डा. श्वेतपद्मा शतपथी
सहाचार्या, राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः

ऐक्यभावनया सर्वे निबद्धाः देशवासिनः।
तदर्थं सज्जनैः उक्तं वसुधैव कुटुम्बकम्।।
उत्क्षेपणं यानस्य वैज्ञानिकैः प्रदर्शितम्।
आन्ध्रे श्रीहरिक्कोट्टायां जयति च परीक्षणम्।।
याज्ञिकाः बहवस्तत्र संयुक्ता यज्ञकर्मणि।
नमोऽस्तु यज्ञदेशाय भारताय नमो नमः ।।
रेलदुर्घटनाकाले यात्रिणः सुष्ठुरक्षिताः।
वालेश्वरनराः धन्याः साहाय्यं यैः प्रदर्शितम् ।।
मक्षिकाणां साहाय्येन मधु संगृह्यते जनैः।
परन्तु क्षुद्रजीवास्ते विलुप्ताः सूर्यतापने ।।
गृहनिर्माणकार्याणि साध्यन्ते हि निरन्तरम्।
यन्त्रिणां सहयोगस्तु तत्रास्ते मुख्यकारणम् ।।
ज्ञाने च भारतं श्रेष्ठं विज्ञानेन समुज्वलम्।
अस्यैव संस्कृतिः श्रेष्ठाः वसुधैव कुटुम्बकम्।।
व्याधोऽपि चकितः जातः कपोतानां स्वबुद्धिभिः।
कपोताः रक्षिताः सर्वे दुःखदात् व्याधबन्धनात् ।।
आगच्छन्तु महात्मानः हे प्रियदेशवासिनः।
माता भूमिश्च पुत्रोऽहं पृथिव्या इति चिन्तया ।। ❖

---

वस्तुतः हमासस्य क्रूरकर्मणां साधूकरणार्थम् एव अभवत्। विपक्षिदलीयाः अपि केचन भीकराणाम् अनुकूलतया भाषन्ते इति अत्यन्तं शोचनीयम्।

## भारतस्य चिन्ता।

वसुधैव कुटुम्बकम्। कस्यचित् मनुष्यस्य धर्मसम्प्रदायः यः कोऽपि अस्तु, जातिः या काऽपि अस्तु, राजनीतिदलं यत् किमपि अस्तु, सः आत्मगौरवेण लोके जीवितुम् अधिकारी अस्ति। अन्यस्य द्रोहं कर्तुं यस्य कस्यापि अधिकारः नास्ति। एकस्य विश्वासे आधुनिकचिन्तया मनुष्यसमाजस्य अनुचितं यद्यत् अस्ति तत् सर्वं त्याज्यम्।

**"ऊर्ध्वबाहुर्विरौम्येष न हि कश्चिच्छृणोति माम्।
धर्मादर्थश्च कामश्च स धर्मः किं न सेव्यते।।"**

(महाभारतम्)

**"युद्धं त्यजत, मैत्रीं भजत सकलविजेत्रीम्।।"**

(काञ्चीकामकोटिपीठस्य परमाचार्यः स्वर्गीयः शङ्कराचार्यः)



# ज्ञानगीतम् ।

(श्रीगुरुपवनपुरेशभक्ताग्रगण्येन पून्तानमहोदयेन कृतस्य ज्ञानप्पानेति काव्यस्य संस्कृतानुवादः ।)



कटत्तनाट् पद्मनाभवारियर्

विलज्जो प्राञ्जलिः स्तुत्याद्
यद्दृष्टं तच्चराचरम् ।
सज्जनेषु च दृष्टेषु
हर्षबाष्पपरिप्लुतः ।
लज्जां विहाय प्रणमेत्
पारुष्यमपि मर्षयन् ।। ८१ ।।

भक्त्यां निमज्य सम्पूर्णं
नृत्यात् मत्त इव क्षणात् ।
यदि भूमौ चरत्येवं
प्रारब्धैर्मुच्यते हि सः ।। ८२ ।।

विहिते कर्मणि प्राप्ते
देहं पतति कुत्रचित् ।
जीवो धावति वेगेन
दृष्ट्वा ब्रह्म स्वकामितम् ।। ८३ ।।

सक्तिं विहाय चरितुं
न पात्रमिति चिन्तयन् ।
न कुर्यात् हृदि सन्तापं
श्रूयतां नामवैभवम् ।। ८४ ।।

अन्त्यजो वाथ वर्णेन
वेदवादी महीसुरः
ऋते मूकान् विना जिह्वां
जातमन्यश्च मानुषः
यदा स्वस्थो भवेत् वापि
स्वप्नेऽबुद्ध्या कदाचन ।। ८५ ।।



अन्यथा वोपहासेन
परार्थमपि वा यदि ।
यत्र कुत्र वसन् स्वस्य
जिह्वया जपते यदि ।। ८६ ।।

अथवा यः शृणोत्येक-
वारं स्वश्रवणेन हि ।
लब्ध्वा स जन्मसाफल्यं
सायुज्यं प्राप्नुयान्नरः ।। ८७ ।।

आचार्येण श्रीधरणे-
त्युक्तं द्वैपायनेन च ।
गीतायामेवमुक्तं हि
वेदाश्चैवं वदन्ति हि ।
सामोदं जप नामानि
तस्मिन् ब्रह्मणि लीयताम् ।। ८८ ।।

नाम्नो माहात्म्यमित्येव-
मलं यदि मतिर्भवेद्
प्रमादोऽप्यप्रमादो वा
प्रसीद भगवन् मयि ।। ८९ ।।

मया हि पद्मनाभेन
कृतं भाषान्तरं त्विदम्
"ज्ञानप्पाने"ति पून्तान-
भूसुरस्य कृतेरहो ।। ९० ।।

समाप्तम् ।






# कारावासिन्यै नोबल् पुरस्कारः।



एन्.के. रामचन्द्रन्, बालुश्शेरी

इरानराष्ट्रस्य पौराधिकारप्रवर्तिका नर्गेस् मोहम्मदि वर्या शान्तिविभागे नोबल् पुरस्कारेण समादृता वर्तते। पुरस्कारोऽयं वैयक्तिकस्वातन्त्र्याय स्वतन्त्रजीवनाय च समरं कुर्वन्तीनां नारीणां समेषां समादरः भवति। स्वपत्युः अपत्ययोश्च दूरात् कारागारस्य एकान्ततायां तिष्ठन्त्याः तस्याः ततः मोचनप्रतीक्षा अपि नास्ति। तस्याः आत्मबलस्य निदानमपि भवत्ययं पुरस्कारः।



१९७२ एप्रिल् मासस्य २१ तमे दिनाङ्के इराने सन्जान् देशे एषा लब्धजन्मा अभूत्। विश्वे अद्य जीवत्सु नारीषु मानसिकं बौद्धिकं च श्रमम् अधीरतां वा लेशमपि अबाधितानां स्त्रीणां मध्ये प्रथमस्थानमावहति इयं धीरवनिता। स्त्रीणां प्रति अनीतिः विवेचनम् उत्पीडनम् इत्येतेषु प्रसिद्धिमापन्नस्य इरानस्य धर्माधिष्ठितप्रशासनं नर्गेस् मोहम्मदि वर्यायै कारावासं प्रादात्। एतस्मिन्नन्तरे समागतेन आमयेन अस्याः स्वास्थ्यं क्षयोन्मुखमभवत्। तस्याः द्वे अपत्ये भवतः। अलि नामकः पुत्रः, कियाना नामिका पुत्री च। १७ वयस्कौ तौ युगलौ भवतः। तयोः मातुः साक्षात्कारं विना एकादशवर्षाणि अतीतानि। यतो हि नर्गेस् मोहम्मदि वर्या २०११ वर्षादारभ्य असकृत् टेह्रानस्थे एविन् नामके कुप्रसिद्धे कारागृहे एव। विख्यातः

मानवाधिकारप्रवर्तकः तथा धर्माधिष्ठितप्रशासनस्य रूक्षविमर्शकश्च भवति तस्याः पतिः टागी रह्मानिया। १९९९ तमे वर्षे आसीत् तयोः विवाहः। तयोरपि मिथः मेलनं विना बहूनि वर्षाणि अतीतानि।

१९७९ तमे वर्षे सञ्जातात् इस्लामिकविप्लवादनन्तरं टागी रह्मानी अपि १४ वर्षाणि यावत् कारावासम् अनुष्ठितवान्। २०१२ तमे वर्षे स पारीस् नगरं प्राप्तवान्। २०१५ तमे वर्षे तयोः पुत्रं पुत्रीं च रह्मानिना साकं पारीस् नगरं प्रैषयत्। स्त्रीणाम् अधिकाराय, स्वातन्त्र्याय, लिङ्गभेदं विना सर्वेषां मानवाधिकाराय, इराने सर्वसाधारणस्य मृत्युदण्डस्य निरोधाय, एकान्तकारादण्डस्य निरोधाय च दशकत्रयं यावत् निरन्तरं समरं कुर्वन्त्याः नर्गेस् इति सामाजिकवनितायाः जीवितं प्रायः कारागारे एवासीत्। अधुनापि तथैव वर्तते। त्रयोदशवारं सा निगृहीता, पञ्चवारं दण्डिता च। दण्डनेषु प्रमुखं भवति ३१ वर्षं यावत् कारावासदण्डः तथा १५४ तोत्रताडनं च।

अध्ययनकाले राजनैतिकरंगे नर्गेस् मोहम्मदिवर्या प्रधानं प्रवर्तनं व्यतनोत्। दैनिक्यां मासपत्रिकायां च स्त्रीणाम् अधिकारमधिकृत्य सा अलिखत्। अपि च एकस्य छात्रसङ्घटनस्य रूपवत्करणमपि तस्याः नेतृत्वे जातम्। याथास्थितिकधर्माधिष्ठितप्रशासनस्य विमर्शकः आसीदयं छात्रसङ्घः। नोबल् शान्तिपुरस्कारजेत्र्याः षेरिन् एबादी इति इरानीयवनितया २००३ तमे वर्षे रूपवत्कृते डिफन्स् आफ् ह्यूमण् रैट् सेन्टर् इति मानवाधिकारप्रस्थाने नर्गेस् वर्या अपि भागं जग्राह। अनन्तरकाले सा प्रस्थानस्यास्य उपाध्यक्षा अपि जाता। प्रस्थानेऽस्मिन् अङ्गत्वमवाप इति दोषमारोप्य २००९ तमे वर्षे सा निगृहीता। व्यवहारेऽस्मिन् जमानतं प्राप्तापि विदेशयात्रायाः प्रतिबन्धः न्यायालयेन कल्पितः। अतः तस्याः वृत्तिदाता अभियान्त्रिकसङ्घः तां वृत्तेः निरकासयत्। २०२२ नवम्बर् मासे कारायां स्थित्वा एव तया प्रकाशितः वैट् टोर्चर् इति ग्रन्थः इराने कारायां वनितान्तेवासिनीः प्रति प्रवर्तमानानि शारीरिकाणि मानसिकानि च पीडनानि विवृणोति। षेरिन् एबादी वर्यायाः प्राक्कथनेन सह प्रकाशितोऽयं ग्रन्थः धर्मप्रशासकान् रोषाकुलान् अकारयत्।

२०२२ सेप्तम्बर् मासे मह्सा जिन अमीनि इति कुर्षिद् इरानी युवतिः शिरोवस्त्रस्य विषये रक्षिपुरुषाणां निष्ठूरमर्दनस्य पात्रीभूय मृता आसीत्। तदानीमपि नर्गेस् कारायामेवासीत्। तस्मिन् समये इरानस्य वीथिषु परसहस्रं जनाः धर्मातङ्कवादं विरुध्य प्रतिषेधं प्राकटयन्। प्रतिषेधोऽयं नर्गेस् वर्यायाः नेतृत्वे एवन् कारागृहे अपि प्रतिध्वनितः। प्रजतन्त्रपालनाय अभिप्रायस्वातन्त्र्याय, लिङ्गाधिष्ठित-विवेचनस्य उन्मूलनाय च प्रवर्तमाना नर्गेस् मोहम्मदिवर्या एवं वदति- मम राष्ट्रे लिङ्गपराणाम् असमत्वानाम् आधिक्यमस्ति, तस्योन्मूलनमेव मम लक्ष्यम् इति।

अस्मिन् वर्षे नोबल् शान्तिपुरस्कारः अर्हतां नातिक्रान्तः इति वक्तुं शक्यते। एतादृशं जीवनम् अस्माकम् आश्चर्यदायकं स्यात्। परन्तु विश्वे बहुत्र एतादृशः अत्याचारः प्रचलति। धर्माधिष्ठिते राष्ट्रे मानवाधिकारस्य मूल्यं नास्ति। मानवास्तु विश्वे सर्वत्र समानाः। धर्मरहिताः एव सर्वे जायन्ते। जननानन्तरमेव कुलमनुसृत्य धर्मव्यवहारः भवति। लोकास्समस्ताः सुखिनो भवन्तु इत्येव अस्माकं प्रार्थना तत्र धर्मस्य अपेक्षा नास्ति। भारतसदृशे लोकतान्त्रिकराष्ट्रे प्रत्यक्षतया धर्मापेक्षता नास्ति। परन्तु परोक्षतया अस्तीति प्रतीयते। यत्किमपि भवतु, धर्मभ्रान्तानां नयनोन्मीलनाय अस्मिन् वर्षे नोबल् शान्तिपुरस्कारः प्रभवतु इति प्रार्थयामहे।



# कौतुकवार्ताः।

डा. टी. नारायणन् कुट्टि, चेन्नै

## कुक्कुटगलहस्तायितो वा चीनः?



(चित्रस्य आश्रयः - Tfipost.com)

भारतम् उत्तरसीमायां, विशेषतः चीनादेशेन सह विवादमाने प्रदेशे, अतीव जागरूकतां पालयति। अधुना डोक्ला उपसीमान्तस्य विषये चीना-भूटान् देशयोर्मध्ये द्वयोर्मुखाभिमुखी चर्चा प्रचलति। बीजिङ् मूख्यनगरे, भूटान्-चीनादेशयोः विदेशकार्यमन्त्रिणौ सम्मिल्य संवदतः। राज्यद्वयोर्मध्ये परस्परसम्बन्धं सुस्थिरं कर्तुं प्रथमतया सीमाविवादानां परिहारः आवश्यकः इति चीनः अभिप्रैति। भारतस्य राज्यसुरक्षाविषये मुख्यभूतः प्रदेशः भवति सिलिगुरी सम्पथः (Silguri corridor)। तस्य अतीव प्राधान्यम् अस्ति, यतः तदीयस्य प्रदेशस्य पश्चिमप्रान्ते नेप्पाल् उत्तरपूर्वप्रान्ते भूटान् देशः दक्षिणे च बङ्ग्लादेशः इति त्रिदेशीय-सीमासङ्गमस्थानमेतत्। भारतस्य सीमायां विद्यमानः भूटान् नाम देशः चीनदेशेन सह सौहृदं सम्पाद्यते। अत्रैव भारतस्य कुक्कुटगलः (chicken neck) इति प्रसिद्धः कृशमार्गः। स सिलिगुरी सम्पथः उत्तर-पूर्व प्रदेशान् प्रति प्रवेशनद्वारमिव वर्तते। १७ किलोमीटर् एव तस्य दूरं वर्तते। सैनिकसुरक्षादिराज्यप्रगतये च अयं मार्गः मुख्यः। चीनासीमां प्रति आयुधानाम् अन्यवस्तूनां च नयनं अनेन मार्गेण एव। डोक्लां पीठभूमिः भूटान् देशान्तर्गता इति भारतं सुदृढं समर्थयति। किन्तु चीनादेशः तेषां चुम्बिपर्वतसानुप्रदेशे अन्तर्गतः तेषां भूभागः इति विवादयति। सिक्किं भूटानयोः मध्ये स्थिता डोक्लापीठभूमिः भारत-भूटान् देशयोः कृते मुख्यभूता सीमा एव। चीनादेशः भारतेन सह २०१७-संवत्सरादारभ्य, वर्षद्वयपर्यन्तं तदीयायां सीमायां युद्धसमाना प्रतियोगिता कृता आसीत्। डोक्लां समीपे सैनिकपथं विमाननिलयमित्यादीन् निर्मीय चीना महाप्रतिरोधम् अकरोत्। चीनायाः कुटिलबुद्धिः अधुना भूटानं वशीकृत्य

भारतं प्रतिरोधयितुं एव इति चिन्त्यते। येनकेनापि प्रकारेण शत्रुतन्त्रान् निर्मूलयित्वा अस्माकं देशस्य रक्षां कुर्मः।

## आकाशेऽपि सुगमसञ्चारपेटिका।



(चित्रस्य आश्रयः - Times Now)

भारते विकसनं त्वरितगत्या संभवति। गमनागमनमण्डले 'वन्दे भारत्', 'नमो भारत्' इत्यादीनाम् आविष्कारः अभवत्। अधुना भारते आकाश-बस् (Skybus) इत्येतत् आरभ्यते। उपरितले लम्बमानरीत्या वाहनं धावति। वायुमलिनीकरणं वा शब्दमलिनीकरणं वा न स्यात्। आयसतन्तुभिः आकृष्यमाणा पेटिका गोधिका इव अट्टतलेन मार्गेण धावति। तत्र सुरक्षाभीतिः नास्ति। भूतले स्थानावकाशः नास्ति। गमनसमये कम्पनं न स्यात्। एवं बहुलाभसंयुक्त अयं परिष्कारः प्रथमतया भारते पञ्चनगरेषु प्रारभ्यते। वाराणसी, पूणे, हैदराबाद्, गुरुग्राम्, मड्गाव् इत्येतेषु नगरेषु प्रथमसेवा मन्त्रालयेन आरब्धुं निश्चिता वर्तते। गोवायां मड्गाव् स्थाने शीघ्रं परीक्षणधावनं स्यात्। वयमपि आकाश-बस् वाहने शीघ्रम् आरुह्य यात्रां कुर्मः।

## काकाः स्वकार्यनिष्ठाः।



पारमार्थिकी वार्ता एका समागता, यत् सौदी अरेबिया नाम देशे वर्धित काकानां सङ्ख्यया सौदी-वन्यजीवि-संरक्षणसंस्था काक-नशीकरणार्थम् आदेशः दत्तः इति। भारतीयवायसानां सङ्ख्या शीघ्रं वर्धते। लघुजीविनाम् अन्यपक्षिणां नाशः काकेन क्रियते। चतुष्पदीनां क्लेशः काकयूथेनैव। 'का' 'का' इति शब्दं कृत्वा शब्दाधिक्यं करोति। विद्युत्स्तम्भेषु गृहप्रान्तेषु वृक्षेषु नीडानि निर्मीयन्ते। अतः सनीडं नाशयितुं निर्णयः सर्वकारेण स्वीकृतः। अस्माकं भारतेऽपि एवमेव काकबाहुल्यम्, अन्यद्विजानां काककृतनाशः, वातावरणस्य स्वच्छन्द-समतुलनस्य भङ्गः इत्यादयः दृश्यन्ते। काकेन कृत समाजद्रोहः न केनापि अत्र परिगण्यते। तादृशावलोकनार्थं अत्र व्यवस्था नास्ति। काकम् आराधयामः केन कारणेनेति चेत्, सः बलिभुक् खलु। 'वसन्तकाले सम्प्राप्ते काकः काकः पिकः पिकः'

इति प्रथा अस्ति। तदानीमपि का का इत्येव रौति। 'कू कू' इति न कूजति। अतः स्वदेशे विदेशे च काकाः नाशकारिण्यः।

## गुप्तचारारोपणं नाविकेषु ।



(चित्रस्य आश्रयः - Hindustan Times)

खत्तर् नाम देशः अष्टानां निवृत्तानां पूर्वतननाविकानां निधनरूपं दण्डनं विधत्ते। ते भारतनाविकसेनायाम् उन्नतोद्योगम् ऊढ्वा विरमिताः। एकः कमान्डर् पदव्याम् अन्यः केप्टन् पदव्यां तथा सर्वे समुन्नतस्थानेष्वासन्। तेभ्यः प्रवासभारतीय-नेवीसम्मान् पुरस्कारमपि दत्वा ते भारतसर्वकारेण समादृताः च आसन्। तेषामुपरि गूढापसर्पकचर्यया ते खत्तर् राज्यस्य जलमग्नयुद्धनौकायाः रहस्यनियन्त्रणांशान् कूटरीत्या ज्ञात्वा अन्येभ्यः राज्येभ्यः प्रदत्तवन्तः इति दोषारोपणं कृत्वा वधदण्डनार्थं ते विहिताः। ते तु खत्तर् मध्ये 'ग्लोबल् कण्सल्टन्सी सर्वीस्' इति एकां संस्थां, निर्वाहयन्ति स्म। तत्तु जलमग्ननौकायाः मुख्यनियन्त्रणान्तर्गतस्य रहस्यसाङ्केतिकत्वस्य विशेषपरिज्ञानोपदेशप्रदायकत्वमासीत्। तन्मध्ये खत्तरेण स्वयं नूतनाविष्कारः अवाप्तः। तत्तु अधिकप्रयोगक्षमतायुक्तस्य जलमग्नप्रवहणस्य अनन्यलब्धः उपयोगक्रमः आसीत्। तादृश-महाक्षमतायन्त्रभणेन रडार् पर्यवेक्षणात् मुक्तः पूर्णतया जलनिमज्जनेन एव स्थातुं ते समर्थाः भवेयुः। २०२२ संवत्सरे आगस्ट् ३० दिनाङ्के तान् सर्वान् च नाविकान् बन्धननियमेन स्तम्भयित्वा कारागारं प्रति प्रेषितम्। तैः सह परिहारचर्चार्थम् आगतं खत्तरीयं पुरुषमापि कारागारे बन्धितम्। अधुना पृथक् पृथक् न्यायविचारणां कृत्वा वधार्थं विधिः समागतः। यदि ते निरपराधिनः स्युः कथं भारतसर्वकारः तान् विमोचयेत्। अन्यथापि आरोपित- दण्डनावलम्बनेन निर्बन्धविधेयकत्वं न न्याय्यम्। तेषां संरक्षणार्थम् उचितं कर्म सर्वकारेण आयोजयेत् इति मन्यते।



वृक्षवाटिका

# शेफालिका

विजयन्. वी. पट्टाम्बि

भारतेषु हि सर्वत्र
शेफालिका प्रवर्धते ।
सुपुष्पि च सुगन्धि च
सस्यं हृदयरञ्जकम् ।।
आरामस्य महाराणी
वनितानां सखी च सा ।
शेफालिका मनोज्ञा हि
मधुगन्धरसैर्भरा ।।
केरलेषु हि सर्वत्र
सस्यस्यास्ति च सन्निधिः ।
औषधत्वसमृद्धं तत्
विंशत्पादमितोन्नतम् ।।
पत्राणि नातिदीर्घाणि
विन्यस्तानि यथोचितम् ।
पुष्पाणि चाथ श्वेतानि
रक्तवर्णानि कुत्रचित् ।।
रात्रिकालेषु गन्धाढ्यं
पुष्पं तत् चोपजायते ।
दिनान्ते तु प्रकीर्णं तत्
चोद्याने परिदृश्यते ।।
यदा शेफालिका सद्यः
पुष्पिणी जायते तदा ।
शलभाः भ्रमराः नूनं
तत्रायान्ति मुदान्विताः ।।
पुष्पं सुगन्धपूर्णं तत्
वनितानामिष्टदायकम् ।
मालां धृत्वा तु सामोदं
लसन्ति ललनाः भृशम् ।।
उष्णवीर्या तथा तिक्ता
शेफालिका महौषधी ।
पत्रं पुष्पं तथा मूलं
सस्यस्यास्योपकारकम् ।।
पत्रं निष्पीड्य सम्मिश्र्य
शुण्डीरसेन निर्मलम् ।
पिबेद्यदि तु कासादि
नूनं शमनमेष्यति ।
रागपुष्पा च शेफाली
नलिनी खरपत्रिका ।
पारिजातेति तस्यास्तु
नामान्याहुः मनीषिणः ।

शेफालिका (प) रागपुष्पा, शेफाली
खरपत्रिका,पारिजाता
कैरल्यां - പവിഴമല്ലി
आङ्गले - Coral jasmine



# दन्तवैद्यस्य वेङ्कटेश्वररावस्य वक्तव्यम् ।

तेलुगु मूलम् - अम्पशय्या नवीनः
अनुवादः - तङ्गेड जनार्दनरावः, वरङ्गल्

(....अनुवृत्तम्)

अस्मिन् विषये पूर्वपरान् अहं जानामि । एष मिथ्यावैद्यः सम्बमूर्तिः मम चिकित्सालयस्य पार्श्वे एव वर्तते । ये रोगिणः तस्य समीपम् आगच्छन्ति तेषां सामाजिकस्थायी, तेन दीयमानः उपचारः मया ज्ञायते । साम्बमूर्तेः वास्तवस्वरूपं ज्ञातुं तम् उद्दिश्य अहं किञ्चित् परिशोधनं कृतवान् । तस्मात् मया ज्ञाताः वास्तवाः अन्यैः न ज्ञायन्ते ।

तस्य विषये वक्तव्यात् पूर्वम् अहम् एकं विषयं स्पष्टतया, निर्दुष्टतया च वदामि । यथा सर्वैः उच्यते तथा तस्मिन् कीदृशी ईर्षा द्वेषः वा मयि नास्ति । मत्तः तस्य वैद्याभ्यासः उन्नतस्तरे अस्ति । तस्य मुख्यकारणं रोगिभ्यः सः निश्चितरूपेण शुल्कं न स्वीकरोति । यत् दीयते तत् स्वीक्रियते । केभ्यः तु शुल्कं न स्वीकरोति एव । किन्तु मम पद्धतिः तथा न वर्तते । मम शुल्कं ५० रूप्यकाणि भवति । यः ५० रूप्यकाणि ददाति सः रोगी एव अन्तः प्रवेष्टुम् अर्हति । रोगिभ्यः मम उपचारः तस्य इव न वर्तते । कः रोगः अस्ति इति अहं निष्कर्षं वदामि । सः औषधदानमेव जानाति । किन्तु तेन रोगः कः इति न ज्ञायते । बहवः वैद्याः रोगिणः लक्ष्णानुगुणं रोगः कः भवेत् इति ऊहां कृत्वा एव औषधानि ददति । बहुषु विषयेषु तेषाम् ऊहा सत्यमेव भवति । तथा बहूनां रोगिणाम् उपशमनं केवलम् औषधप्रभावेणैव भवति । तत्र वैद्यानां सामर्थ्यं न किमपि भवति एव । दीर्घरोगी उत्तमः वैद्यः इति कथनं किञ्चित् सत्यम् अस्ति । अत्र साम्बमूर्तिः एव दृष्टान्तः ।

सम्बमूर्तिः कस्यचित् समर्थस्य दन्तवैद्यस्य समीपे किञ्चित् कालं कार्यं कृत्वा दन्तवैद्यस्य रहस्यानि सर्वाणि ज्ञातवान् । रोगाणुगुणम् औषधदानमपि ज्ञातवान् । मया तथा न दीयते । बाह्यदर्शनात् दन्तः कथमस्ति इति अहं न वदामि । "किरणचित्रम् आनयतु, तत् दृष्ट्वा वदामि" इति मया उच्यते । रोगिणे एतत् न रोचते । "पुनः किरणयन्त्रज्ञस्य समीपं कुतो वा गन्तव्यम्" इति वदन्ति । विना "किरणचित्रं भवतः दन्तः जीर्णः, उत्पाटनीयः" इति साम्बमूर्तिः वदति । तथैव दन्तस्य अपनयनमपि विना पूर्वजागरूकतया बहुरूक्षतया करोति । दन्तसज्जीकरणमपि तथैव करोति । धनं न्यूनं स्वीकरोति इत्यतः रोगिणः एतत् सर्वं न परिगणयन्ति । अतः आतुराः मत्तः तस्य समीपमेव अधिकाः गच्छन्ति इति कथने तत्र कः आश्चर्यः वर्तते? तस्य समीपे तत्क्षणम् एव उपचारः लभ्यते । मम समीपे तथा न लभ्यते ।

अयं वैद्यः अधिकं शुल्कं स्वीकरोति । सर्वाणि परीक्षणानि कारयति महार्घौषधानि लिखति च । दन्तपीडार्थं गम्यते चेत् शतद्वयस्य व्ययः भवति इति रोगिणः मयि आक्षेपान् कुर्वन्ति इति मया ज्ञायते । किन्तु मयि आत्मविश्वासः अस्ति । अचिरात् एव सः

मिथ्यावैद्यः तस्य वैद्यं च न विश्वसनीयम् इति जनाः जानन्ति। अतः तं प्रति मम द्वेषः नास्ति। परन्तु तस्मिन् विश्वासेन ये रोगिणः तस्य समीपं गच्छन्ति तेषां विषये मम चिन्ता वर्तते। कोऽपि सर्वान् चिरकालं वञ्चयितुं न शक्नोति। केचन वञ्चिताः भवन्ति अल्पकालं यावत्। तस्य विजयः तात्कालिकः एव। अन्तिमविजयः मम एव इति अहं जानामि। अतः एव द्वेषाय मम हृदये स्थानं नास्ति एव।

अधुना प्रकृतं विषयं वदामि। एषा घटना अस्य नगरस्य बहूनां जनानां रसनासु मर्दिता भूत्वा स्वस्य निजस्वरूपं नष्टम् अभवत्। प्रतिजनम् एतां घटनां किञ्चित् वक्रीकरोति।

उदाहरणार्थं शोधनं पश्यामः। सः लघुपत्रकारः। अल्पे समये एव अरुणशौरिः इव कीर्तिं प्राप्तुं स्वप्नायते। अतः एव सः एतां घटनां यथावत् द्रष्टुं न इच्छति। अतः उपबृंहितवान्। स्वनेत्राभ्यां दृष्टवान् इव सः लिखितवान् । वस्तुतः सः न किमपि दृष्टवान्। जनानां भाषणं श्रुत्वा सर्वं स्वीयनेत्राभ्यां दृष्टम् इव लिखितवान्। एतां घटनां वाटर्गेट् परिवादात् अपि बृहत् इति चिन्तितवान्। एतां बोफोर्स् परिवादात् अपि महान् इव पश्यति। तथा क्रियते चेत् विश्वं तं परिशोधकपत्रकारः इव परिगणयति इति, अकस्मात् वैश्विकपत्रकारः भविष्यामि इति तस्य आशा अस्ति।

तेन चिन्तितं किञ्चित् आसादितवान्। इतः पूर्वं सः दिने त्रिवारम् अन्नमपि सम्यक् न प्राप्नोति स्म। तादृशः सः इदानीं दिने त्रिवारम् इष्टपूर्वकं खादनं प्राप्नुवन् अस्ति। सहस्रप्रतिकृतयः अपि न विक्रीयमाणा तस्य पत्रिका अधुना पञ्चसहस्रं विक्रीयते। शोधनः अपि परिशोधनपत्रकारः इति प्रतिष्ठां प्राप्तवान्। भविष्यति काले सः भाग्यनगरं वा अन्यत्र वा गत्वा कस्याश्चित् राष्ट्रियपत्रिकायाः प्रधानवृत्तनिवेदकः भवेत् चेत् अपि अस्माकं विस्मयः न भवेत्।

एवम् एतया घटनया बहवः जनाः लाभं प्राप्तुम् इच्छन्ति। उदाहरणाय राजम्माम् एव स्वीकरोतु। राजम्मायाः पूर्वचरितम् अधुना सर्वैः ज्ञायते। सा महती पतिव्रता इति न कोऽपि चिन्तयति साम्प्रतम्। किन्तु एतस्याः घटनायाः आरम्भकाले तु तां सर्वे पतिव्रता इति भावितवन्तः। सर्वे तस्यां सहानुभूतिं दर्शितवन्तः। सहानुभूतिद्वारा धनं कथं सम्पादनीयम् इति सा सम्यक् ज्ञातवती। विवेकेन चातुर्येण च सा एतया घटनया अधिकाधिकं लाभं प्राप्तवती। तया सह चिकित्सालयं गतवती पोचम्मा अपि किञ्चित् लाभं प्राप्तुं प्रयत्नं कृतवती। किन्तु तथा न प्राप्तं चेत् सा विपर्यस्ता अभवत्।

मम एतेन वचनेन सम्बमूर्तिः निर्दोषी इति मा चिन्तयन्तु। सः निर्दोषी तु नास्ति। सः बृहद्दण्डनमेव प्राप्नुयात् ।



साम्बमूर्तिविषये येन केनापि यत् न ज्ञायते तत् केवलं मया एव ज्ञायते । साम्बमूर्तिः एकः शृङ्गारोन्मादी अस्ति। मदनप्रक्रियां दूरात् एव दृष्ट्वा तुष्यति । किन्तु स्वयं तत्कार्यं कृत्वा न नन्दति । सः अपौरुषः अस्ति। अर्थात् नपुंसकः। सः राजम्मां न धर्षितवान् एव। मया उक्तं वास्तवं श्रुत्वा भवन्तः आघातिताः भवेयुः।

यथा आदौ सर्वे चिन्तितवन्तः अहमपि तथैव सः राजम्मायाः शीलहरणं कृतवान् इति चिन्तितवान्। न केवलं चिन्तितवान्, अहं सर्वान् उक्तवान् अपि । वस्तुतः राधायाः साम्बमूर्तेः च सम्बन्धमपि अहमेव प्रकटितवान्। एतावन्मध्ये एव अर्थात् एतस्याः घटनायाः पश्चात् एव मम परिचितः कश्चन आयुर्वेदवैद्यः साम्बमूर्तेः निजस्वरूपं माम् उक्तवान्।

भास्कराचारिनामा कश्चन प्रथितः अयुर्वेदवैद्यः अस्मिन् नगरे अस्ति। आदौ सः सामान्यः आयुर्वेदवैद्यः इति अहं चिन्तितवान्। किन्तु अचिरात् एव यः तस्य समीपं वारं वारं गच्छति सः रोगी माम् उक्तवान् यत् सर्वे कस्माच्चित् पौरुषलोपात् एव तस्य समीपं गच्छन्ति इति। पौरुषसामर्थ्यं वर्धयितुं सः विविधानि औषधानि ददाति इति, तानि सम्यक् प्रभावं दर्शयन्ति इति अहं श्रुतवान् । एवं सः बहुषु मानवेषु स्थितं क्लैब्यलोपं समीकरोति इति तस्य रोगिणः सगर्वं वदन्ति।

मम समीपं मम दूरबन्धुः कश्चन तस्य दन्तपीडनकारणात् आगतवान्। सः माम् उक्तवान् यत् सः भास्कराचारिः क्लीबनिवारणस्य निपुणः वैद्यः अस्ति इति। मम बन्धोः नाम जानकीरामय्यः अस्ति।

जानकीरामय्यः चत्वारिंश्द्वर्षीयः अस्ति। तस्य भार्याद्वयम् अस्ति। विहाय एतत् कलत्रद्वयम् अन्याभिः महिलाभिः तस्य सम्पर्कः अस्ति इति, सः महान् स्त्रीलोलः इत्यपि मम बन्धुवर्गेषु परस्परकथनम् अस्ति। सः दर्शने वामनः स्तोकः च वर्तते। महिलाः आक्रष्टुं तस्मिन् लक्षणानि मया न दृष्टानि। तथापि बह्वीभिः महिलाभिः तस्य सम्बन्धः अस्ति चेत् तदाश्चर्यः विषयः एव।

तस्य दन्तानां परीक्षाणाम् अनन्तरं तम् अहम् उक्तवान्। भवतः दन्तेषु बहवः अपनयनीयाः। अतीव दुषिताः सन्ति। भवान् सर्वदा ताम्बूलचर्वणं करोति किल! ताम्बूले भवान् जर्दां योजयति किम्? इति अहं पृष्टवान्।

जर्दां विना अहं वीटिकां न स्वीकरोमि एव इति सः उक्तवान्।

भवतः के के अभ्यासाः सन्ति? इति अहं पृष्टवान्।

अहम् आयुर्वेदौषधानि सातत्येन स्वीकरोमि इति सः उक्तवान्।

किमर्थम् आयुर्वेदौषधानि सातत्येन उपयुङ्क्ते ?

द्वारपिधानं कृत्वा यदा नूतनदम्पती रतिक्रीडायां स्तः तदा तयोः क्रीडां दृष्ट्वा सः स्वयमेव तत् कार्यं कुर्वन् अस्ति इव अनुभूतिं प्राप्नोति स्म। यदा तौ एतस्य दुष्टाभ्यासं जानीतः तदा गृहं रिक्तीकृत्य गच्छतः स्म।

आम्। अयं विषयः मया अपि ज्ञायते। सद्यः विवाहितं त्रिचक्रिकाचालकं तस्य जायां च आनीय तस्य गृहे संस्थाप्य इदमेव कार्यम् कृतवान् इति मया श्रुतम् इति अहम् अवदम्।

अन्येन अज्ञातम् अन्यम् एकं विषयं भवन्तं वदामि शृणोतु। वर्षद्वयात् पूर्वं सः काञ्चित् बालिकां परिणयमपि कृतवान् इति सः वैद्यः उक्तवान्।

विवाहं कृतवान् वा? अहं न विश्वसिमि। सः बह्वीभिः महिलाभिः सम्बन्धं कल्पयति इति श्रुतं, किन्तु न कोऽपि उक्तवान् यत् सः विवाहं कृतवान् इति। कञ्चित् कालं यावत् सः राधया सह अटितवान्। कस्मिंश्चित् देवालये तां युवतीं नाममात्रविवाहं कृतवान् किम्? इति अहम् उक्तवान्।

राधायाः परिचयात् पूर्वमेव काञ्चित् बालिकां परिणीतवान्। सः विवाहः एकान्ते सञ्जातः। अतः एव केनापि न ज्ञायते। तद्वदामि शृणोतु।

तस्याः बालिकायाः नाम सरला अस्ति। सुवर्णपाञ्चालिका इव वर्तते। सा द्युतिमती च। सा बालिका तस्य भ्रातृजाया इव सम्बन्धं संवहति। पितृस्वसुः पुत्री अस्ति। बाल्यात् तस्यै बालिकायै एषः अतीव रोचते। किन्तु तस्याः बालिकायाः मातापितरौ तु एतेन वैद्येन विवाहं न इच्छतः। यतः एतस्य बन्धुवर्गः कः अपि नास्ति कष्टे जाते तम् उद्धर्तुम् । किञ्च एतस्य प्रवर्तनस्य विषये तयोः सन्देहः अस्ति। बाल्यतः एव एषः दुरभ्यासपरः इति तौ अवगतवन्तौ। अतः एव सरलया तस्याः पिता उक्तवान् — त्वं तं वैद्यं विवाहं करोषि चेत् तव जीवनं सुखाय न भवति। यथा दृश्यते बाह्यात् तावान् उत्तमः नास्ति सः इति। न वचनमात्रमेव तस्याः पिता उत्तमं युवकं चित्वा विवाहमुहूर्तमपि निश्चितवान् । सा बालिका विवाहसमयात् द्वित्रदिनेभ्यः पूर्वमेव गृहात् पलायनं कृत्वा एतस्य वैद्यस्य समीपम् आगतवती। आवां विवाहं कुर्वः इति सा एनम् उक्तवती। सहसा तां बालिकां परिणेतुम् एतस्य भीतिः सञ्जातः। विवाहानन्तरं सम्मुखीकरणस्य समस्यां सः सम्यक् जानाति। अतः विवाहं निवारयितुं सः शतधा प्रयत्नं कृतवान्। किन्तु सा बालिका तस्याः दुराग्रहं न त्यक्तवती। शीघ्रं सः विवाहं न करोति चेत् मृत्तैलेन आत्मानं भस्मीकरोमि इति सा शपथम् अकरोत्। एतं विषयं ज्ञात्वा साम्बमूर्तेः कानिचन मित्राणि तौ द्वौ वधूवरौ देवालयं प्रति नीत्वा विवाहकार्यं सम्पन्नम् इति घोषितवन्तः।

विवाहस्य परेद्युरपि एव सः मम समीपम् आगत्य स्वसमस्याम् उक्तवान्। तस्मै काश्चित् सूचनाः दत्तवान्। सः जन्मतः न क्लीबः। तस्मै शृङ्गारः बहुधा रोचते। अहं महान् रसिकः इति वाचयितुं महत् कौतूहलम् अस्ति तस्य। यावत् मैथुनकार्यं चिन्तयति तावत् पर्यन्तं सः न क्लीबः एव। परन्तु वास्तवसम्भोगकार्ये सः क्लीबः भवति स्म। एवं किमर्थं जायते इति अहं गभीरतया चिन्तितवान्। साम्बमूर्तेः बाल्यविषये कांश्चन प्रश्नान् पृष्ट्वा समग्रं चरितं ज्ञातवान्। एतस्य बाल्यकाले प्रवृत्ता काचित् घटना एतस्य मस्तिष्के प्रबलं प्रभावम् अजनयत् इति मम भाति।

सम्बमूर्तेः सुन्दररूपम् अस्ति इति भवान् जानाति खलु! बाल्यकाले तु इतोऽपि सुसुन्दरः अवर्तत इति श्रुतम्। गौरवर्णः, स्थूलः, कुटिलालकैः दर्शकानाम् आकर्षकः आसीत् इति अपि श्रुतम्। एतस्य काचित् दूरबन्धुस्त्री कुरूपवती आसीत्। भयङ्करी अपि आसीत्। सा बहुवारम् एतस्य गृहम् आगच्छति स्म। साम्बमूर्तौ अनुरागं दर्शयन् सर्वदा एनं बालकम् उन्नीय चुम्बन्ती क्रीडति स्म। विविक्तप्रदेशं नीत्वा एतेन बालकेन असभ्यतया क्रीडति स्म। तेन इयं मां किमपि कुर्यात् इति भीतिः तस्मिन् आरब्धा। सा भीतिः एतस्य वयसा सह उपचिता आसीत्।

एतादृशं भयं मानसिकशास्त्रे मुष्कमर्दनम् (Castration) इति उच्यते इति अहम् उक्तवान्।

सत्यम्। तस्मिन् मुष्कमर्दनतत्त्वं वृद्धिं गतम्। महिलां यावत् दूरात् दृष्ट्वा ताम् अधिकृत्य चिन्तयति तावत् तस्मिन् शृङ्गारभावः सम्यक् उद्दीपितः एव भवति। किन्तु यदा महिला समीपम् आगच्छति तदा एषा मां किमपि कुर्यात् इति त्रासः उपजायते। तेन भयेन सः नपुंसकः भवति। इदं सर्वं तस्य अज्ञाततया एव सम्भवति इति भास्कराचारिः उक्तवान्।

पश्चात् किं प्रवृत्तं तद्वदतु इति अहम् उक्तवान् ।

(अनुवर्तिष्यते....)

नाटकम्

# पाण्डवविवासः ।

कालूरि हनुमन्तरावः
हैदराबाद्

## सप्तदशं दृश्यम् ।

(प्रविशन्ति दुर्योधनकर्णशकुनयः ।)

दुर्योधनः - माम! द्यूते तवाक्षक्षेपनपुण्यमद्वितीयम् । अनायासं पाण्डवानां सर्वा सम्पत् मया विजिता । मम गदाप्रहारः कदाचिद् व्यर्थो भवेत् । कर्णस्य बाणो लक्ष्यात् स्खलेत् । तवाक्षक्षेपस्तु आवश्यकादङ्कान्त-स्खलति ।

(त्रयश्च हसन्ति ।)

कर्णः- दुर्योधन! निरुत्तरीयान् निषण्णान् तव दासान् पाण्डवान् स्रस्तशाटिकां विकीर्णकेशां दुश्शासनेनाकृष्यमाणां पुरा इन्द्रप्रस्थराज्ञीं तदा दासपत्नीं द्रौपदीं पश्यतो मम सम्मादोऽभवत् ।

दुर्योधनः - मित्र! कर्ण! अत्र मम सन्देहः । द्वाभ्यां कराभ्यां सा पतीनां दास्यमोचनमगृह्णात् । तृतीयं वरं नागृह्णात् आत्मनो दास्योमोचनं नावृणोत् । कथमिदम्? एवमिदानीमपि सा मम दासी भवति ।

कर्णः - न भवति । तत्र शकुनिना दोषः कृतः । यदा तस्याः पतयो दासा अभवन् । तैः सह सा च दासी अभवत् । किन्तु तव मातुलः तदा युधिष्ठिरस्य निर्बन्धमकरोत् तव धनं ‘द्रौपदी शिष्यते तां पणं कृत्वा क्रीडति । तस्मात् तेनाङ्गीकृतं तदा द्रौपदी अविजिता अदासी चेति । किन्तु तदा दासस्य युधिष्ठिरस्य पणकरण- प्रभुता नासीत् । तस्मात् द्रौपदी पणेन कृता सा अन्त्या क्रीडा न सिध्यति । सततविजयहृष्टेन शकुनिना स विषयो न चिन्तितः । मया च तदा न चिन्तितः । यदा सा तृतीयं वरं नागृह्णात् आत्मनो दास्यान्मोचनं च नागृह्णात् तदा मया स विषयश्चिन्तितः पतिभिः सह सा दास्यान्मुक्ता इति । सा विवेकवती ।

शकुनिः - प्रिय! दुर्योधन! तव विजयस्याधिको भागो नष्टः। तव पितरि भीष्मविदुरादिभिर्भयमुत्पादितं स्यात्। स पाण्डवानदासानकरोत्।

दुर्योधनः - मम पितुरिदमेव मनोदौर्बल्यम्। अहं तं विवेकवचनैर्भूयो भूयः सुमार्गे स्थापयापि। किन्तु भीष्मविदुरयोः कुवचनैः कर्तव्याद् भ्रश्यति। मम माता पुस्तकेषु पठितानि नीतिवाक्याति वदति। तस्या लोकज्ञानं नास्ति राजकीयज्ञानं शून्यम्। तथापीदानीं मम चिन्ता नास्ति। राज्यं मया प्राप्तम्। मम बहवो दासाः सन्ति। पाण्डवानां दास्यं मम मास्तु । दरिद्रास्ते दूरे सन्तु कथञ्चिज्जीवन्तु म्रियन्तां वा। अहं तान् पुनर्द्रष्टुं नेच्छामि।

शकुनिः - पाण्डवाः समर्थाः। ते पुनश्च वृध्दिं प्राप्नुयुः।

कर्णः - मम बाणास्तान् ततः पातयेयुः।

(संरम्भेण दुश्शासनः प्रविशति।)

दुश्शासनः - भ्रातः ! वृद्धः पिता अस्माकं सम्पदं व्यनाशयत्। पाण्डवानामिन्द्रप्रस्थराज्येन सहाद्य द्यूते नष्टां सर्वां संपदं पुनरयच्छत्। पाण्डवाः सम्मोदेन इन्द्रप्रस्थं प्रस्थिताः। यथा आगतास्तथा गताः। अद्य मातुलेन प्राप्तः सर्वो विजयो व्यर्थोऽभवत्।

दुर्योधनः - इदं पितुरकृत्यम्। तस्य मनः स्थिरं नास्ति। भूयो भूयः कर्तव्यात् कृताञ्च श्रेयो मार्गादपि भ्रश्यति।

शकुनिः - वयं पुनश्च तव पितरं वक्ष्यामः। पिता तवाधीनः। तत् त्वं जानासि। इदानीं पितरं दृढं गृहाण। युधिष्ठिरं पुनश्च द्यूतायाह्वानार्थं वद। इदानीं द्यूतं धनपणेन मास्तु। सकृदेवास्तु। पराजितो युधिष्ठिरश्चतुर्भि र्भ्रातृभिः द्रौपद्या च सह द्वादशवर्षारण्यवासमेकवर्षं सजने प्रदेशे अज्ञातवासं च करोतु। यदि अज्ञातवासकाले तेषामेकोऽपि विदितो भवेत् तर्हि पुनश्चारण्याज्ञातवासौ तैः कर्तव्यौ। अरण्याज्ञातवासौ परिसमाप्य ते तेषां राज्यं पुनः प्राप्नुयुः। यदि त्वं पराजितो भवेस्तर्हि त्वं तथा करिष्यसि तव भार्यया चतुर्भिः सोदरैश्च सह। किन्तु त्वं जानासि त्वं जेष्यसि।

दुर्योधनः - पितरमङ्गीकारयितुं प्रबलं प्रयतिष्ये।

शकुनिः - कुरु प्रयत्नम्। निश्चयं कुरु। त्वं जानासि पितरं कथं वशीकर्तुम्।

दुर्योधनः - जानामि। एवं करिष्यामि।

(निष्क्रान्ताः। यवनिका पतति।)





(चित्रस्य आश्रयः - Outlook Traveller)

# दीपावली ।



**नारदोपाध्यायः**, वैदिकगणसदस्य

शाब्दिकदृष्ट्या 'दीपावली' इत्युक्ते दीपानाम् आवलीति षष्ठीतत्पुरुष-समासान्तर्गतं पदमेतत् । दीपानां पर्व इदं भारतस्य महत्त्वपूर्णेषु पर्वसु अन्यतमम् । पर्व इदं कार्तिकमासस्य अमावस्यातिथौ, रात्रौ च परिपाल्यते । वर्षाऋत्वनन्तरं सर्वे गृहिणः स्वगृहस्य, गृहपरिसरस्य च सज्जीकरणं, वर्णलेपनादिकार्यम् आरभन्ते । अमावस्याः सन्ध्याकाले जनाः घृतस्य अथवा सर्षपस्य तैलेन दीपान् प्रज्वाल्य स्वगृहं, देवमन्दिरं, गोशाला इत्यादिस्थानेषु स्थापयन्ति ।

अस्मिन् दिवसे वणिजः लक्ष्मीपूजनम् अत्यन्तं वैभवेन कुर्वन्ति । विगतवर्षस्य आयव्ययादिकस्य गणनां, लेखनं च सम्यग्रीत्या सम्पाद्य, ते पुनः नूतनपुस्तिकां स्वीकृत्य अग्रिमगणनाम् आरभन्ते । तान्त्रिकाः अस्यां रात्रौ स्वकीयान् तन्त्रमन्त्रान् आचरन्ति । जनानां मनसि विश्वासः यत् अस्मिन् दिवसे यस्य कार्यस्य प्रारम्भः क्रियते, तत्कार्यम् आवर्षं सफलतां गच्छेदिति ।

दीपावलीपर्वणः उत्पत्तिसन्दर्भे नानाकथाः प्रचलिताः वर्तन्ते । केचन वदेयुः यत् राज्ञः बलेः कारागृहे देवताभिः सह माता लक्ष्मीः अपि अवरुद्धा आसीत्, तदा भगवान् विष्णुः वामनरूपं विधाय अस्यां तिथौ हि बलिराजस्य गर्वं चूर्णीकृत्य लक्ष्मीदेवीं कारातः मोचितवान् आसीदिति । एवम् अन्ये केचन विद्वांसः वदेयुः यत् अस्यामेव तिथौ भगवान् विष्णुः नरकासुरं हतवान् आसीत्, अतः अस्मिन् उपलक्ष्ये हि अयमुत्सवः मन्यते इति । इतरे

केचन एवमपि वदेयुः यत् वनवासं पूर्णीकृत्य भगवान् श्रीरामचन्द्रः सीतालक्ष्मणादिभिः सह यदा सकुशलम् अयोध्यां प्रत्यागतवान् तदा अस्यां हि तिथौ तस्य राजतिलकं सञ्जातम् आसीदिति। तस्मिन् दिने न केवलम् अयोध्यायां हि, अपि तु अखिलभारतवर्षे आनन्दोत्सवः आचरितः आसीत् समस्तभारतवासिभिः। भगवतः श्रीरामचन्द्रस्य राजतिलकस्य स्मृतिरक्षार्थम् इयं तिथिः अद्यापि दीपोत्सवत्वेन परिपाल्यमाना वर्तते । एवं प्रकारेण अन्यद्विधं कारणमपि अस्य पर्वणः उत्पत्तिसन्दर्भे तर्क्यते विद्वज्जनैः।

यत्किमपि कारणं भवतु नाम, एतत्तु स्वीकार्यमेव स्याद् यद् दीपावलीपर्व अत्यन्तं महत्त्वभूतं पर्व वर्तते इति। सम्यग्विचार्यते तर्हि एतस्य महत्ता सम्यक्तया स्वयं च प्रकटीभवति । महत्तमः विषयो यत् वर्षाभ्यन्तरेऽपि यस्य गृहे न कदापि सम्मार्जन्याः कार्यावसरः सञ्जातः, अर्थात् गृहस्य सम्मार्जनं नाक्रियत केनापि, तादृशे गृहेऽपि अस्यां पर्वतिथौ स्वच्छता विधीयते । तादृशेषु स्थानेष्वपि तद्दिने प्रकाशः उद्दीप्यते । अनेनैव पर्वव्याजेन ग्रामाः नगराणि च स्वच्छीभवेयुः।

स्वास्थ्योपरि स्वच्छतायाः कियान् गम्भीरः प्रभावः वर्तते इत्ययं न कस्यापि अज्ञातः विषयः। अनया चित्तप्रसन्नता एवं शारीरिकी निरामयता अधिगम्येते, तथा च रोगसङ्क्रमणभयं न बाधते । दीपानां प्रकाशेन वायुः शुद्धतां गच्छेत्, येन च कीटाणुजन्यरोगाणां प्रसरणस्य आशङ्का अपगच्छेत् । ते कीटाणवः दीपाग्निना दह्यन्ते । अन्यच्च, सर्षपतैलदीपात् यः धूमः निस्सरति, तद्द्वारा तैलपरमाणुः वायुना सह सम्मिल्य शीतकाले समस्तदेशस्य कृते स्वास्थ्यजन्यं लाभं जनयति। परन्तु उपर्युक्तविषयम् अज्ञात्वा अधुना केचन महत्सु नगरेषु विद्युद्दीपैः, एवं ग्रामेषु मृत्तैलदीपैः दीपावलीपर्व आचरेयुः, अनेन तु लाभस्य विपरीततया हानिर्हि भोक्तव्या भवेत् ।

दीपावली-महापर्व अस्मभ्यम् आध्यात्मिकप्रकाशं प्रददाति। मनुष्याणाम् अन्तःकरणं सदा दीपप्रकाशवत् ज्ञानेन प्रकाशितं भवेत्, तथा सङ्कीर्णतां विहाय उदारयुक्तं भवेदिति शिक्षाम् अस्मभ्यं प्रददाति। अस्य पर्वणः सामाजिकं, धार्मिकं चेति दृष्टिद्वयेन हि अप्रतिमं महत्त्वं वर्तते इति तु निराकर्तुं न शक्यते । अस्यां तिथौ धनाधिष्ठात्र्याः लक्ष्मीदेव्याः पूजनं कुर्वन्ति हिन्दुजनाः। वणिजः आयव्ययसम्बद्धां गणितशिक्षां सम्यग्रीत्या प्राप्नुवन्ति। यः जीवने एनां शिक्षां न प्राप्नुयात् सः अवश्यम् अपव्ययगर्ते हि निपतेत्। अपव्ययः हि मनुष्यस्य अवनतेः कारणम्। स्वकीयम् आयानुसारं व्ययः कर्तव्यः, तस्माद्धि उन्नतिमार्गे बाधा नायाति कदापि।

अस्मात् दीपावलीपर्वणः अनेके शुभलाभाः प्राप्यन्ते, चेदपि अद्यतनाः मन्दमतयः केचन पर्वनाम्ना स्वस्य पुरतः अजस्रं धनं संस्थाप्य निर्ममतया अक्षतासपत्रादिकं खेलन्ति । पर्वनाम्ना मद्यपानम्, अश्लिलनृत्यम् इत्यादिकमपि क्वचिदवलोक्यते। अतः एतादृशम् असामाजिकं कार्यम् अकार्यमेव, यच्च पापमूलं कलङ्कयुक्तञ्च। एतादृशस्य दुष्कार्यस्य निर्मूलीकरणं हि वरं स्यात्, जनहिताय।

लेखस्य उपसंहारे, अस्माभिः यत्किमपि सांस्कृतिकं पर्वाचरणं क्रियते तत् सम्यक्तया विचार्य, श्रद्धापूर्वकं च पालनीयम्। अस्मात् प्रकाशपर्वद्वारा अस्माभिः न केवलं रात्र्यन्धकारः हि दूरीकर्तव्यः, अपितु स्वान्तःकरणे स्थितां कालिमाम् अपनेतुं चेष्टा कार्या इति, शुभम् ।








नन्दनारण्यतुल्यं वनं तत्र च,
पुष्पकुञ्जे हि भृङ्गाश्च गुञ्जन्त्यहो।
पक्षिवृन्दं समोदं रतं गायने,
अध्ययोध्यं भवत्यद्भुतं किञ्चन।।
यद्भुवः पावितं रामपादै रजः,
चुम्बते खस्य भालं जनोद्भावितम्।
शून्यमार्गस्थिता मंदनेत्रास्सुरा,
अध्ययोध्यं भवत्यद्भुतं किञ्चन।।
नावशेषः क्वचित् स्थानकं विद्यते,
मञ्जुलोपायनैः रामभूषायुतैः।
भक्तकोलाहलैर्या पुरी पूरिता,
अध्ययोध्यं भवत्यद्भुतं किञ्चन।।
यत्सभायां वसिष्ठो गुरुर्मैथिली,
लक्ष्मणो वै हनूमान् समे वानराः।
मातरो भ्रातरो भान्ति साकं परम्,
अध्ययोध्यं भवत्यद्भुतं किञ्चन।।
सेवमानोभिरामः कपीशेन यो,
भ्रातृभिः सीतया भूषमाणः कियान्।
नागराणां जयैः यत्र पूर्णा दिशा,
अध्ययोध्यं भवत्युद्भुतं किञ्चन।।
राजसिंहासने रुह्यमानः प्रभुः,
विश्वसौन्दर्यराशिर्यथा संस्थिता।
पुष्पवृष्ट्या सुराणां वृता तद्धरा,
अध्ययोध्यं भवत्युद्भुतं किञ्चन।।
मृत्युलोकोऽभवत् स्वर्गलोकप्रभः,
यत्र गन्धर्वगानं कियच्चारुकृद्।
अप्सरोनर्तनं सामगानैः परम्,
अध्ययोध्यं भवत्यद्भुतं किञ्चन।।
वेदगानं क्वचिच्छास्त्रचर्चा क्वचिद्,
यज्ञहोमः क्वचित् साधुमानं क्वचिद्।
योगयज्ञः क्वचिद् ज्ञानयज्ञः क्वचिद्,
अध्ययोध्यं भवत्यद्भुतं किञ्चन।।
सर्ववीथीषु हट्टेषु सर्वत्र च,
चत्वरेषु क्वचिद् राजमार्गेषु वा।
दिव्यसज्जा स्थिता यत्र चेतोहरा,
अध्ययोध्यं भवत्यद्भुतं किञ्चन।। 

# श्रीनन्दराजकृतकृष्णजन्मोत्सवः।



डा. रुरुकुमारमहापात्रः
अध्यापकः, पुराणेतिहासविभागः
राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः

श्रीकृष्णस्य गोकुलस्थनन्दगृहगमनान्तरं सर्वे गोपाः नन्दगृहमागत्य श्रीकृष्णस्य दर्शनं कृतवन्तः। एवञ्चोक्तवन्तो यथा- हे नन्द! अस्य बालकस्य गोकुलगमनादनन्तरं गोकुले सर्वाणि शुभलक्षणानि दृश्यन्ते। अतोऽयं स्वयं विष्णुरेवेति। गोपगोपीनामीदृशं वचनं श्रुत्वा नन्दः आत्मानं पूर्णाऽऽशिषं चिन्तितवान्। तद्दिनादारभ्य व्रजे प्रतिदिनं मङ्गलान्याविर्भूतान्यभवन्। सर्वे दिव्यवस्त्रावृतास्तथा दिव्याभरणभूषिताश्चाभवन्। नानाविधं गानं नृत्यादिकञ्च प्राचलत्। गावो वस्त्रमाल्यपर्वतधातुभिश्चित्रिताः अभवन्। वृषाः गावश्च वत्सान् स्वाङ्गानि च लिहन्ति तथा पुच्छान् ऊर्ध्वं क्षिप्त्वा इतस्ततः प्रधावन्ति स्म । गोपाः गोप्यश्च प्रमुदिताः सन्तः दधिकर्द्दमं कृत्वा परस्परं विलिम्पन्ति स्म। ब्रह्मवादिनां द्विजानां श्रुतिघोषस्तत्राऽभवत्। दुन्दुभ्यानकतूर्याणां शङ्खादीनाञ्च निस्वनैः गगनपवनप्रकम्पितमभूत्। सर्वेषां गृहकर्माणि परित्यक्तान्यभवन्। अधिकं किं कथयामः, सर्वे स्वशरीरमपि न सस्मरुः। इत्थं नन्दगृहे अष्टप्रहर-पर्यन्तमखण्डानन्दस्य वृद्धिरभूत्। महामान्यो नन्दः सर्वेभ्यः उत्तमं दानं ददौ, तथा सूतमागधवन्दिभ्यः वासोऽलङ्कार-भोजनानि प्रायच्छत्। एवं प्रकारेण नन्दकृतः श्रीकृष्णजन्मोत्सवः आदिपुराणे वर्णितोऽस्ति।

श्रीमद्भागवते श्रीकृष्णजनमोत्सवस्य सुन्दरवर्णनं समुपलभ्यते । पुत्रः जातः इति श्रुत्वा नन्दः स्नानादिकं समाप्य उत्तमाभरणैः भूषितः भूत्वा ब्राह्मणानाहूय पुत्रस्य जातकर्मसंस्कारेण सह देवानां पितृणाञ्च विधिपूर्वकं पूजनमपि कारितवान् । अनन्तरं यत् ब्राह्मणेभ्यः दानं, नृत्यगीतम् आनन्दोत्सवादयश्च सर्वम् आदिपुराणेन साकं साम्यमर्हति । परन्तु यत् आदिपुराणे संक्षेपेण वर्णितमस्ति, तद् भागवते विस्तृततया लभ्यतेति ।

श्री आनन्दवृन्दावनचम्पूकाव्ये श्रीकृष्णजन्मोत्सवस्य विस्तृतवर्णनं सुन्दरतया उपमानेन सह विद्यते। तत्र यदा नन्दः सूतिकागृहं प्रविश्य बालकृष्णं प्रथमतया दृष्टवान्, तदानीन्तनावस्थायाः उपमानेन सह सुन्दरवर्णनं काव्येऽस्मिन् वर्तते। तद्यथा- "............त्वरितमभ्यर्णमभ्येत्य बीजमिव घनानन्दस्य, अङ्कुरमिव जगन्मङ्गलमङ्गलोदयस्य, पल्लवमिव सिद्धाञ्जनलतायाः, कुसुममिव चिरतरसमय-समुत्पन्नसुकृतकल्पमहीरुहारामस्य, फलमिव सकलोपनिषत्कल्पलतावितते:, ब्रजेश्वरीवपुर-पराजिता-

लतायाः प्रसूनमिव तनयमालोक्य.............।" इति। श्रीकृष्णोत्सवे अन्यत् यत् सर्वं नृत्यगीतादिकं, दानादिकं तथा आनन्द-महोत्सवादिकमाचरितं तत्सर्वम् आदिपुराणवत् काव्येऽस्मिन्नपि चित्रितं परिलक्ष्यते । किन्तु आनन्दवृन्दावनचम्पूकाव्ये श्रीकृष्णजन्मोत्सवस्य वर्णनमधिकं रसालं विस्तृतञ्चेति ।

गोपालचम्पूकाव्ये श्रीकृष्णजन्मोत्सवस्य सुन्दरवर्णनं समुपलभ्यते । काव्येऽस्मिन् श्रीकृष्णस्य जन्म स्वयमाह्लादस्य जन्म इति चित्रितम् । तद्यथा-

**आह्लादेन समं जज्ञे बाल किं किं स एव सः ।**
**एवं विवेकन्तु नन्दस्य नासीन्मतिमती मतिः ।।** इति।

श्रीकृष्णजन्मोत्सवे रात्रौ देवाः स्वर्गे स्थित्वा स्वर्गवाद्यं वादितवन्तः, येन वाद्यवादनस्य कारणं अन्विष्यन्तः सर्वे गोपाः गोप्यश्च नन्दस्य पुत्रः जातः इति ज्ञातवन्तः, तद् गृहञ्च आगत्य जन्मोत्सवे योगदानं कृतवन्तः इति काव्येऽस्मिन् वर्णितमस्ति । तद्यथा-

**अपि श्रुतमभून्निशि त्रिदिववाद्यगज्जौजतं,**
**जितं जिमिति स्वनं न तु विनिश्चितं कारणम् ।**
**तदा तदनुवादि तत् कलयताममीषां मुहु-**
**र्मुदा कलकलारवः समजनि व्रजप्राणिनाम् ।।** इति।

अनन्तरं मङ्गलकार्येषु निपुणाः विप्रगणाः सभायां प्रविश्य श्रीकृष्णबलरामयोः आशीर्वचनं वेदमन्त्रपाठनैः सह समापितवन्तः । तद्यथा -

**सुखाविष्टस्तस्मिन्मधुरपविष्टैः सदसै तै-**
**र्महा स्निग्धैः शर्मप्रकरपरिदग्धैः परिवृतः ।**
**पठद्भि पुत्राशीरुचितनिगमं भूसुरेश्वरैः,**
**किरद्भिर्दूवाद्यं शिरसि सुखपूर्वं स सहितः ।।** इति।

इत्थं श्रीकृष्णजन्मोत्सवविषयः यदादिपुराणे वर्तते तदेव, तस्मात् अधिकञ्च सरसरूपेण गोपालचम्पूकाव्ये वर्णितमिति निश्चीयते ।



## अस्य मासस्य प्रश्नोत्तरस्य उत्तराणि।

१. भर्तृहरिः
२. भासः
३. देवता
४. रामायणात्
५. षट्
६. उपाविशत्
७. आनन्दमठात्
८. सामवेदात्
९. अग्निपुराणे
१०. पाणिनेः
११. पूर्णा नद्याः तीरे
१२. श्रीहर्षः
१३. प्रकरणेषु
१४. त्रुटिः
१५. बुधवासरः
१६. जूलाई ११
१७. चत्वारिंशत्
१८. राजस्थानेन
१९. एतत् + श्रुत्वा
२०. स्थालीपुलाकन्यायः
२१. तृतीया
२२. बालगङ्गाधरतिलकः
२३. निलीय
२४. द्रुमाः
२५. आम्रम्

# भारतीयज्ञानपरम्परायां संस्काराणां महत्त्वम्।



- डा.चूडामणि त्रिवेदी
सहाचार्यः, वनस्थली विद्यापीठम्
राजस्थानम्

(...अनुवृत्तम्)

**४.अथ शैशव-संस्काराः** -जातकर्म संस्कारः- समुत्पन्ने शिशौ यानि- विधानानि विधीयन्ते तानि शिशुप्रसूतिकयोः कृते स्वास्थ्यचिकित्सादृष्ट्या सन्ति हितावहानि। जातस्य कुमारस्याच्छिन्नायां नाड्यां ॐ भुः ॐ भुवः ॐ स्वः इति तिसृभिर्महाव्याहृतिभिः स्वर्णान्तर्हित-अनामिकया मधुघृते प्राशयति, अनेन तस्य मेधाजनन जायते पुनः कुमारस्य दक्षिणकर्णे नाभ्याम् वा आयुष्यकरणमन्त्रान् जपति। परम्परानुसारं जाते बालके तत्कर्णपार्श्वे कांस्यस्थाली वाद्यते, अस्योद्देश्यद्वयं वर्तते प्रथमं तावदस्य शिशोः पञ्चज्ञानेन्द्रियेषु सर्वप्राक् श्रवणशक्तिरेव सचेष्टा समुदबुद्धा च जायते।

द्वितीयमेतद् यच्छब्दश्रवणानन्तर बालकश्चकितो न भवेत्। चरके कर्ण- समीपे प्रस्तरवादनस्य वर्तते विधानम्। यथा -हि 'अश्मनो संघट्टनं कर्णमूले सूतिकायाः शिरः प्रदेश रक्षोदककुम्भस्थापनं विधीयते। सूतिकाद्वारेऽग्नौ तण्डुलसर्षपाणां प्रातः सायं आहुतिद्वयं दीयते, अनेन बालक पीडादायक शुण्डमर्कादिविघ्नकारितत्त्वानां विनाशोजायते। षष्ठे दिने सूतिकाबालकयोः आयुरारोग्यवृद्ध्यर्थं सकलारिष्टशान्तये षष्ठीदेव्याः पूजनमपि क्रियते ।

५.नामकरण संस्कारः- जन्मत एकादशदिने वा यथाचारं नियतदिने वा संस्कारोऽयं कार्यः । यदि एकादशे दिवसे नामकरणसंस्कारः कर्तुं न शक्यते तदा अष्टादशे , एकोनविंशे दिने , शतरात्रे व्युष्टे, अयने,संवत्सरे गते वा संस्कारोऽयं विधातव्यः चतुर्विधानि नामानि धार्याणि १ देवतानाम, मासनाम, नक्षत्रनाम, व्यवहारनाम, अथवा प्रसिद्धनाम च। ब्राह्मणस्य शर्मान्तं देवान्तं वा, क्षत्रियस्य वर्मान्तं , पालान्तम् वा, वैश्यस्य गुप्तान्तं, शूद्रस्य दासान्तं नाम कार्यम्। देवतानामसु कुलदेवतानाम्नोऽग्रे भक्तइति योज्यम्, मासनामसु चैत्रादिक्रमेण य उत्पद्येत तस्य यथाक्रमं

**कृष्णोऽनन्तोऽच्युतश्चक्री, वैकुण्ठोऽथ जनार्दनः।**
**उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ।।**
**योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ।**

नक्षत्रनाम - यस्मिन्नक्षत्रे य उत्पन्नस्तस्य नक्षत्रस्य या देवता तद् देवतानाम तस्य रक्षणीयम् इत्येकः प्रकारः नक्षत्रचरणाक्षरानुसारमपि नामानि कार्याणि नाक्षत्रं नाम मौजीबन्धनावधि गुप्तं रमणीयं केवल मातापितरावेद जानीयाताम्। कन्यानामान्यपि चतुर्विधान्येव टावन्तानि ङीबन्तानि वा कार्याणि व्यवहारनामानि सार्थकानि व्याकरणादिभ्यः कल्पनीयानि। इत्थं शास्त्रनिर्दिष्टनाम-

रक्षणेन तत्तन्नामानुसारं तेषां गुणा जायन्ते। साम्प्रतं पाश्चात्य सभ्यतानुसारं निरर्थकानि निर्गुणानि नामादि धार्यन्ते अत एवं समाजे निर्गुणानां जनानां बाहुल्यं वरीवृत्यते।

६.निष्क्रमण-संस्कारः- यथा शिशुशरीरं बाह्यवातावरणोष्णताशीतलता सहनसमर्थं स्यात्तदा संस्कारोऽयं विधेयः। चतुर्थे मासे बालकस्य सामर्थ्यं विज्ञाय मनुना निष्क्रमणस्य (गृहाद् बहिर्गमनस्य) व्यवस्था प्रदत्ता- **'चतुर्थे मासि निष्क्रमणिका सूर्यमुदीक्षयति तच्चक्षुरित' सूर्यदर्शने निम्नलिखितं मन्त्रं पठेत्।**

**मन्त्रः**

**ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः**
**शतं जीवेम शरदः शतं श्रृणुयाम शरदः**
**शतं प्रब्रवायाम शरदः शतं शतमदीनाः**
**स्याम शरदः शतम्भूयश्च शरदः शतम् ।**

महर्षिणा याज्ञवल्ययेन संस्कारोऽयं सूर्यावेक्षणनामोल्लिखितः सर्वप्राक् निष्क्रमणं विधाय सूर्यदर्शनेन बालस्य प्राणेषु शक्तिदायिनी स्फूर्तिः सञ्चरति आयुर्वृद्धिश्च जायते निष्क्रमणादायुषो वृद्धिरप्युपदिष्टा मनीषिभिः।

**७.अन्नप्राशन-संस्कारः**- संस्कारस्यास्य प्रमुखं प्रयोजनमिदं वर्तते यत्-माता शिशुं पष्ठे मासे स्तन्यपानात् त्याजयति। यतो हि तस्मिन् काले बालकस्य अन्नादिभक्षणस्य आकाङ्क्षा जायते पाचनशक्तोर्विकासत्वात् मातुर्दुग्धस्य क्षीणत्वाच्च। मध्वाज्यसहितमन्नमेकस्मिन् रजतादिपात्रे निधाय मातुः स्वस्य वा क्रोडे स्थितं बालकं देवतापुरतोऽनामिकया 'ॐ अन्नपतेः' इति मन्त्रेण प्राशयेत। ततो बालकस्य पुरतः पुस्तकशस्त्रवस्त्रादि शिल्पं विन्यसेत् शिशुः स्वेच्छया प्रथमं यद् गृह्णीयात्तेनैव तस्य जीविका भविष्यतीति जानीयात्।

**८.चूडाकरणसंस्कारः**- सांवत्सरिकस्य चूडाकरणम् तृतीये वाऽप्रतिहते। हिन्दीभाषायां 'चोटी' इति प्रसिद्धः शब्दः चूडा इति शब्देन निष्पन्नो भवेत् इति सम्भाव्यते। संस्कारोऽयं न मुण्डनसंस्कारः अपितु वर्तते शिखारक्षण-संस्कारः, चौलसंस्कारो वा । एकस्मिन् वर्षे शिखारक्षणाय बालकल्य केशाः दीर्घा जायन्ते, शिखाऽपि तादृशी स्यात् यस्यां बन्धनं जायेत यतो हि प्राक्तम् - 'सदोपवीतिना भाव्यं सदा बद्धशिखेन च'। इत्थमेकस्मिन्वर्षे केशा इयन्तो दीर्घा भवन्ति यत् कृतेचपि तेषां वपने शिखायां ग्रन्थिः सुगमतया कर्तुं शक्यते । इत्यं शास्त्रीयमहत्त्वातिरिक्तं लौकिकदृष्ट्याऽपि चूडाकरणस्य प्रचुरं महत्त्वं विद्यते । यदि बालकस्य जन्मजाताः केशाः कर्तिताः स्युः तदा पुनः सुन्दराः स्वस्थाः केशाः प्रादुर्भवेयुः न च स्युस्तत्र चर्मरोगाः ।

**९.कर्णवयसंस्कारः**- तृतीये पञ्चमे वा वर्षे ज्योतिः शास्त्रोक्तशुभमुहूर्ते संस्कारोऽयं कार्यः। पुरा पुमांसोचपि कुण्डलाद्याभूषणानि धारयन्ति स्म, साम्प्रतं तु संस्कारोऽयं बालिकानामेव कृते विधीयते । पुंसः सूर्यरश्मिप्रवेशयोग्य स्त्रीणाञ्च यथेच्छं रन्ध्रं वेधयेत्।

**१०.शैक्षणिक संस्कारः** -अक्षरारम्भः / विद्यारम्भः -
**पञ्चमे सप्तमे वाब्दे पूर्वः स्यान्मौजिबन्धनात्।**
**तत्रैवाक्षरलेखश्च कर्त्तव्यस्तु शुभे दिने।**

बालको गणेशाद्यावाहितदेवता अध्यापकगुरुश्च नमस्कृत्य गुरोः समीपे प्रत्यङ्मुखमुपविश्य रजतादिपाटिकायां मङ्गलार्थं कुङ्कुमादिलेपनं कृत्वा तदुपरि सुवर्णशलाकया **श्रीगणेशाय नमः, श्रीसरस्वत्यै नमः श्रीकुलदेवतायै नमः श्रीगुरुभ्यो नमः श्रीलक्ष्मी-नारायणाभ्यां नमः ॐ नमः सिद्धम्**, इति लिखित्वा **'ॐ पावका नः'** इति मन्त्रेण षोडशोपचारैः सरस्वतीं पूजयेत्।

(अनुवर्तिष्यते....)

# प्रश्नोत्तरम्।



के.जी. रमाबाय्

१. सुप्रसिद्धः सुभाषितकारः कः?
२. केरलीयः प्रसिद्धः संस्कृतनाटकाचार्यः कः?
३. भारती, गैर्वाणी, देवता, संस्कृतम्। एषु किं गणे नान्तर्भवति?
४. तपः स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् '........कस्मात् ग्रन्थाद् उद्धृतमिदम्?
५. वेदाङ्गानि कति?
६.'उपविशति' इत्यस्य भूतकाल क्रियारूपम् किम्?
७. 'वन्दे मातरं....वन्देमातरम् ..।' इति गीतं कस्मात् ग्रन्थात् उद्धृतम् ?
८. सङ्गीतस्य उद्भवः कस्मात्?
९. शिल्पशास्त्रं कुत्र प्रतिपाद्यते?
१०.दाक्षीपुत्रः इति कस्य नाम भवति?
११.शङ्कराचार्यस्य जन्मभूमिः कस्याः नद्याः तीरे भवति?
१२.नागानन्दं नाम नाटकस्य कर्ता कः?
१३.'मृच्छकटिकम्' केषु रूपकविभागेषु अन्तर्भवति?
१४.कालगणनाम् अनुसृत्य लघुतमः कालः कः?
१५.अद्य शुक्रवासरः। परह्यः कः वासरः?
१६.विश्वजनसंख्यादिनम् कस्मिन् दिने?
१७.चन्द्रयान्-३ कति दिनानन्तरमेव चद्रमण्डलं प्राप्तः?
१८.बालिकानाम् सुरक्षायै 'आश्रय' इति पद्धतिः केन देशेन आयोजिता?
१९.एतच्छ्रुत्वा। सन्धिच्छेदः कः?
२०.एकस्मात् समुदायात् एकं, द्वौ वा परीक्ष्य तत्समुदायस्य अवस्था निर्णीयते। अत्र कः न्यायः?
२१.सह,समं,साकं,सार्धम्। एषां योगे का विभक्तिः प्रयुज्यते?
२२.गीतारहस्यम् नामकस्य ग्रन्थस्य कर्ता कः?
२३.पानाय, दानाय, निलीय,रक्षणाय। एषु अव्ययपदं किम्?
२४.ये पुष्पैः सह फलन्ति ते किम् इति उच्यन्ते?
२५.भारतस्य देशीयफलं किम्?

---

## गतमासस्य प्रश्नोत्तरस्य उत्तराणि।

१.जूलै ११
२.१९५६ तमे
३.रबीन्द्रनाथ टागोर्
४.इटुक्की
५.प्लाट्टिनम्
६.कथाकेलिः
७.आदित्य- एल्-१
८.पश्चिमघट्टे
९.श्रावणमासे श्वेतपौर्णमीदिने
१०.कफम्
११.धर्मेन्द्रप्रधान्
१२.अतिविशिष्टम्
१३.कुञ्जन् पिल्ला
१४.मुण्डकोपनिषदः
१५.अप्पय्यदीक्षितः
१६.हाङ्षौ
१७.लङ्
१८.महात्मागान्धिनः
१९.गौः + एका
२०.अक्रूरः
२१.दनुजः
२२.अहम्
२३.२००५ तमे वर्षे
२४.डा. राजेन्द्रप्रसाद्
२५.संस्कृतभाषा।

# समस्यापूरणम् ।

अपराश्च पराश्चैव
विद्या तु द्विविधा मता।
सरस्वत्या प्रदत्ता सा
विद्या कल्पलतासमा।।

टी के सन्तोष कुमार्
करुणाराम् AUPS नन्मिन्टा

या विद्या ज्ञानसम्पन्ना
ददाति परितोषणाम्।
अभिमानप्रदानेन
विद्या कल्पलतासमा।।

ए. सुतशी GHSS चात्तनूर्

स्वजीवने किमाप्तव्यं
सत्सङ्गो वा धनं यशः ।
दत्वा दत्वा यथेष्ठं मे
विद्या कल्पलतासमा।।

राधिका एम्,
AUPS तेञ्जिप्पालम्

पण्डितानां सभायां तु
प्रवाससमयेऽपि च
सहायिका सदा मह्यं
विद्या कल्पलतासमा।।

के.जी रमाबाय् कण्णूर्

विद्या ददाति सौन्दर्यं
विद्या सौशील्यमेव च ।
समत्वं विद्यया लभ्यं
विद्या कल्पलतासमा।।

सन्ध्या GVHSS-कोल्लम्

अप्नोति विद्यया सौख्यं
धनं धैर्यं यशो बलम्।
अमृतत्वं लभते मर्त्यः
विद्या कल्पलतासमा।।

नितिन् मास्टर् मुतुतला

अज्ञाननाशिका विद्या
व्ययेषु चापि वर्धिका।
गुरुणा दीयमाना स
विद्या कल्पलतासमा।।

दिव्या चित्रन् वटकरा

सर्वाभीष्टप्रदा विद्या
सर्वशास्त्रार्थनिर्भरा।
अज्ञाननाशिका हन्त!
विद्या कल्पलतासमा।।

रश्मी जी. पिल्लै
KVS-HSS, मुतुकुलम्

अज्ञानात् ज्ञानतामेति
ज्ञानात्सर्वं विधीयते।
अनेन मोदतां याति
विद्या कल्पलतासमा।।

राजेन्द्रः माटमना वयनाट्

नित्यं सुखप्रदा विद्या
संततं चाक्षया तथा ।
काचिद् विद्यासमा नास्ति
विद्या कल्पलतासमा।।

अभिरामी GGHSS,
कोट्टन्हिल्, तिरुवनन्तपुरम्

सर्वदाक्षरसंयुक्ता
सदा चापि प्रवर्धिनी।
सुधासारभरा चैषा
विद्या कल्पलतासमा।।

एन् राजगोपालन् तृश्शूर्

इच्छितं दीयमाना सा
जीवनविभवं तथा।
विद्यां विना कथं जीवेत्
विद्या कल्पलतासमा।।

एन् विजयन् कोट्टारक्करा

माता हि देवतातुल्या
पिता दिनकरोपमः।
धनं बन्धुश्च केषाञ्चित्
विद्या कल्पलतासमा।।

परमेश् काञ्अङ्ङाट्

पूर्णचन्द्रप्रभा विद्या
संस्कारैश्चापि संयुता।
तन्नाम्ना वर्धते नित्यं
विद्या कल्पलतासमा।।

ए उण्णिकृष्णन् नम्पूतिरि, तिरुनावा

काव्यशास्त्रविनोदाय
सुविधा ह्युपकारिका।
विद्यया सौख्यसम्प्राप्तिः
विद्या कल्पलतासमा।।

वासुदेवः पालकाट्

विनयेनान्विता विद्या
कामधुगिव सर्वदा।
अत एवोच्यते सद्भिः
विद्या कल्पलतासमा।।

रम्यश्री आलप्पुषा

यच्चिन्तयति यद्व्यक्तिः
यत्करोति च तत्सदा।
पूर्णतां नयने व्यग्रा
विद्या कल्पलतासमा।।

पी श्रीजा HSS-पेरिङ्ङाट्

ददाति विनयं विद्या
यशः सुखकरं तथा ।
ऐश्वर्यदायिनी नित्यं
विद्या कल्पलतासमा।।

बीपात्तु कुमरनेल्लूर्

कविभिः सेविता नित्यं
सम्पुष्टा च निरामया।

वेदपुराणसम्पन्ना
विद्या कल्पलतासमा।।
एम्. दामोदरन् नम्पूतिरिप्पाट्
मुतुतला

विद्या रक्षति सर्वत्र
ददाति विजयं तथा।
विद्या शोभयते सर्वं
विद्या कल्पलतासमा।।
एम्. शङ्करन् मास्टर् वलियकुन्नु

सा विद्या विनयाधारा
श्रेयस्करी शुभाकरी
सा विद्या पातु मे नित्यं
विद्या कल्पलतासमा।।
रमा सी वी नेन्मारा HSS

बालानां कर्मनैपुण्यै
यूनामुद्योगलब्धये।
वृद्धानां शान्तये कापि
विद्या कल्पलतासमा।।
डा. नारायणन् नम्पूतिरि, मञ्चेरि

विद्या ददाति संस्करं
विद्या जीवितमुत्तमम्।
शिक्षणाज्जायमाना सा
विद्या कल्पलतासमा।।
जगदीश्वरी एम्.आर्
GUPS वेस्ट् याक्करा

विद्या विनयदात्री च
विजयस्यापि साधिका ।
सर्वैश्वर्यप्रदानेन
विद्या कल्पलतासमा।।
रमा टी चिट्टूर्

अन्धकारात् प्रकाशं या
कुटीरात् सौधमुत्तमम्।
नयति मानवान्नित्यं
विद्या कल्पलतासमा।।
षमीर् इब्राहीं, पत्तनापुरम्

ज्ञानदा भूतिदा चैव
यावन्मृत्युसमस्थिता।
रक्षणे चार्जितानाञ्च
विद्या कल्पलतासमा।।
डा. जयलक्ष्मी मेषत्तूर्

विद्यया लभते ज्ञानं
विद्यया लभते धनम्।।
विद्यया लभते कीर्तिं
विद्या कल्पलतासमा।।
सती यम्, AUPS इरुम्पकश्शेरी

विद्यया विन्दते सर्वं
विद्यावान् वन्द्यते सदा ।
विद्या बन्धुरहो सा च
विद्या कल्पलतासमा।।
एन् के भारकरन् वटकरा

ऐहिके भुवने पश्य
विद्या सर्वार्थसाधिका।
अनन्यानुपमा चैव
विद्या कल्पलतासमा।।
राधाकृष्णन् वटकरा

अन्धकारविनाशाय
प्रकाशमनसे तथा
विद्यया लभते सर्वं
विद्या कल्पलतासमा।।
के.पी राजलक्ष्मी, CUPS चेम्ब्रा

ऐश्वर्यदायिनी विद्या
सर्वमङ्गलकारिणी ।
व्ययने वर्धते नित्यं
विद्या कल्पलतासमा।।
षीबा AUPS आमयूर्

रागद्वेषहरा विद्या
सुहार्या नैव बन्धुभिः।
धनेषु चोत्तमा हृद्या
विद्या कल्पलतासमा।।
के शान्तकुमारी, तानूर्

स्नेहं बन्धुबलं मैत्रीं
ज्ञानं जीवनसाधनम् ।
विद्यया खलु प्राप्नोति
विद्या कल्पलतासमा।।
वी.जे श्रीकुमारः
अमृता संस्कृत HSS पारिपल्ली

देशविदेशराज्येषु
भोजनपानसङ्कटे।
प्रभूनां गौरवाभावे
विद्या कल्पलतासमा।।
टी. जनार्दनरावः, वरङ्गल्

विद्या ददाति सन्तोषं
परत्रेह च सर्वदा।
विद्यया लभ्यते ज्ञानं
विद्या कल्पलतासमा।।
के. शिवरामभट्ट्

मरुस्थल्यां यथा वृष्टिः
ज्ञानिनां मोक्षसाधिनी।
इच्छाप्रदा सदा नित्या
विद्या कल्पलतासमा।।
सूर्यप्रकाश मिश्रः, वाराणसी

विद्या ददाति सद्बुद्धिं
सदाचारं सुखं श्रियम्।
कामं मोक्षं तथा मानं
विद्या कल्पलतासमा।।
मञ्जुलगिरि वेङ्कटरमण भट्टः
बेट्टम्पाडि

**समस्याकारस्य पूरणम्।**

विद्या गुरुमुखात्प्राप्ता
सततं शोभतेतराम्।
सम्पन्ना विनयेनापि
विद्या कल्पलतासमा।।
विजयन् वी पट्टाम्पि

**अस्य मासस्य समस्या**

**भारतं सुन्दरं मम।।**

